Digitized by Arya Samaj Foundation Chennai and eGangotri

1867
18675
आ

## भार्गवीयमधिकृत्य.........

भार्गवाणां वृत्तमनुशीलनबुद्ध्या महाकाव्यरूपेणेदं चरितानुकीर्तनं प्रणीय कविमनः पद्यपुष्पाञ्जलि रोमाञ्चाञ्चितं जातम्। भृगु-मृकण्डु-शुक-शौनक-दधीचिजमदग्निप्रभृतयो मुनयोऽत्र भावमालाभिरर्चिताः पृथक् पृथक्। शब्दसाधनेयं भावतरङ्गराजिभिरूर्जिता पल्लविता च परशुरामशौर्यं राष्ट्रनिर्माणचातुर्यञ्चैकपद एवातनोति। दुर्वृत्तवृत्तशीलान् प्रमथ्य मखसंस्कृतिमनुपाल्य, विजित्यापि दुर्विनीत-शासनवीतां वसुधामात्मनो हिताय न सिषेवे। यज्ञाचरणप्रसङ्गे राष्ट्रियां भावनां पोषं पोषं ददौ महीं मुनये कश्यपायाचार्याय। श्रीविद्योपासनामरन्दचञ्चरीकता दत्ता दत्तात्रयमहायोगिभिरुवास चायं परशुरामो रामो रम्ये महेन्द्राचले। जमदग्निवधादेवाततायिनां विनाशाय राष्ट्रहितार्थं मनोदधे मनोजवः परशुधरः। गोभ्यः ब्राह्मणेभ्यः संस्कृत्यै, राष्ट्राय शं कामयन्नयं वरप्राप्तिबलगर्वितं सहस्रार्जुनं सपरिकरं रणाजिरे नाशयामास। गुरवे दत्तां महीं विहाय पुनरयाचत निवासाय समुद्रं स्थानम् परन्तु रोषभीत एवासौ समायातः। परशुना समुद्रमपोवाह्य कोङ्कणं निर्ममे। तत्रापि जनानां निवासयोजनां विदधे। कृषिगोरक्ष्यादिकं च प्रवर्तयामास। भार्गवो रामः विद्याप्रदानं, दुष्टविनाशनं, पितुः सप्तर्षिमण्डले स्थापनं, शिवाराधनं, श्रीविद्योपासनं, राष्ट्रनिर्माणं विधायापि दाशरथये सर्वां भूरक्षावृत्तिं कोदण्डार्पणमिषेण समर्प्य मुनिर्बभौ, जीवति चाद्यापि चिरंजीवितया साधनायाः फलमूर्त्या प्रकटीभवति च भक्तानां हृदि। भारतस्य दशामेतादृशीं विलोक्य परशुरामः कथं सहते? महाकाव्येऽस्मिन् सर्वं दृश्यपटं दृग्गोचरतां याति। साद्यन्तं परशुरामवृत्तानुकीर्तनमेव वरीवर्ति तदनुरोधेनैव वृत्तवैविध्यं क्वचिदलंकारसायुज्यं तत्रापि काव्यबन्धादिकं वर्वर्ति। परशुरामचरितवर्णनव्याजेन दुःशासनप्रवृत्तिमुन्मूलयितुं चेतनाऽत्र स्फुरिता भवति यया राष्ट्रिया वृत्तिः नवनिर्माणप्रवृत्तिश्च भवेदुद्गता भारतीयानां मानसे चेतसि, क्रियासु च। भार्गवीयम् परशुरामचरितनिरूपणेन राष्ट्रार्पितमनोवृत्तीनां स्वकर्तव्यनिष्ठानां प्रबोधाय संदिशति भारतीयं तारुण्यम्।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# भार्गवीयम्

डॉ० मिथिलाप्रसादत्रिपाठिना विरचितम्

न्यू भारतीय बुक कॉरपोरेशन

(दिल्ली) : : (भारत)

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

*प्रकाशक :*
**न्यू भारतीय बुक कॉरपोरेशन**
5824, न्यू चन्द्रावल, (निकट शिव मन्दिर)
जवाहर नगर, दिल्ली-110007
फोन : 23851294, 65195809
E-mail : newbbc@indiatimes.com

प्रथम संस्करण : 2008

813
त्रिपाठी - भा

© लेखकाधीन

ISBN : 81-8315-078-0

*मुद्रक :*
**जैन अमर प्रिंटिंग प्रैस**
दिल्ली-7

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विषय-सूची



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# हार्दिकं किञ्चित्..........

राष्ट्रस्य रक्षार्थं ब्राह्मं क्षात्रं च तेजसी युगपद् आवश्यके वर्तेते। ब्राह्मे तेजसि सुप्ते सति दिग्विहीनं भवति क्षात्रं

तेजस्तथैव क्षात्रे तेजसि प्रसुप्ते ब्राह्मं तेजः क्रियाहीनं भवति। राष्ट्रस्य निर्माणे, रक्षणे पोषणे च तेजोद्वयमनिवार्यम्। तेजोद्वयाभ्यां राष्ट्रं शासितं पालितं रक्षितं विकसितं पल्लवितं पुष्पितं फलितं च भवति। राष्ट्रं संस्कृतिनिष्ठं, लोकहितशीलं, सत्तामण्डितं विधातुमाचरितमाजीवनं मुनिना परशुरामेण। परशुरामो न केवलं शास्त्रविचक्षणो मुनिरपितु शस्त्रप्रवीणोऽपि ख्यातो बभूव। एकत्रैव तस्मिन् ब्राह्मं क्षात्रं चास्ताम्। विश्वामित्रमुखेन भवभूतिः समुपदिशति पुरोहितानां महिमानं राष्ट्रसंदर्भे।

**न तस्य राष्ट्रं व्यथते न रिष्यति न जीर्यति।**
**त्व विद्वान् ब्राह्मणो यस्य राष्ट्रगोपः पुरोहितः।।**

भारतीयां संस्कृतिं संस्थापयितुं, राष्ट्रविरोधिसत्वानुशासनं विधातुं, स्वकीयामस्मितां ख्यापयितुं जागर्ति परशुराम एव जगतीमण्डलेऽस्मिन् केवलम्, परन्तु चक्रवर्तिष्वन्यतमो राजा दशरथः परशुरामं प्रति महावीरचरिते न्यवेदयद् यत् –

**निसर्गतः पवित्रस्य किमन्यत्पावनं तदा।**
**तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भृगुं, च्यवनं, शुक्रं, शौनकं, दधीचिं, और्वम्, मार्कण्डेयं जमदग्निं वा स्मारं स्मारं कस्य मनो न व्रजति चपलताम्। भृगुकुलमुनीनां पावित्र्यं, तपःशीलत्वं, राष्ट्रचिन्तनं, संस्कृतिनिष्ठत्वं गाढं विचिन्त्य मम मनसि काव्यप्रवाहः समजायत यद्यप्येतेषां पृथक् पृथक् चरितानुशीलनं महाकाव्यतां याति, परन्तु मया पुण्यचरितानु–कीर्तनलुब्धेन भार्गवाणां वृत्तं रचितम् 'भार्गवीयम्' नाम। रिरचयिषा मामवृणोत् अरचयमहमपि, परन्तु भगवतः परशुरामस्य कृपैवात्र सर्वत्र वरीवर्ति। याचे तमेवाशरणोऽहम् –

येषां कृपाजलधराम्बुसुवर्षणेन,
प्राप्तव्यमर्थमधिगत्य नरः सुखी स्यात्।
याचेऽहमद्य भृगुवंशमणीन् प्रपन्नः,
संसारसिन्धुमिह चोत्तरणाय सद्यः।।

भूयान्मुदे परशुरामकृपाकटाक्षात्
पद्यप्रसूनरचिता मम भा[illegible]ला।
सन्तर्पणाय विदुषां च मनः सुखाय,
मन्येऽर्पये सुमनसामथ भार्गवीयम्।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# भार्गवीयमहाकाव्यावेक्षणम्

भव्य भार्गव गोत्रीये श्रोत्रिये च सुधीमति।
रामभक्तिमये वंशे जातो यो महाकविः।।

श्री मिथिलाप्रसादाख्यस्त्रिपाठ्याचार्यसत्तमः।
भार्गवीयं महाकाव्यमकार्षीदतिमञ्जुलम्।।

विकीर्णं चरितं विष्णोरिहैकत्रा विराजते।
एतदवेक्षणं किञ्चद् यथामति विधीयते।।

'यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह।
तँल्लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना'।।

यजुर्वेद 20/25

राष्ट्रस्य विकासाय सुरक्षायै, प्रशासनाय, संरक्षणाय च यत्रा ब्राह्मणः (ज्ञानिनो/बुद्धि मन्तः) क्षत्रियाः (शास्तारः) परस्परमेकेऽपरान् सम्मानयन्ति, स लोकः पुण्यवान् भवति। विपरीतायां स्थितौ यद राष्ट्रे शास्तारः ज्ञानिनः (ब्राह्मणान्) तिरस्कुर्वन्ति तदा राष्ट्रमधोगतिं प्राप्नोति। विषयेऽस्मिन्नथर्ववेदो वक्ति–

'उग्रो राजा मन्यमानो ब्राह्मणं यो जिघत्सति।
परा तत्सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते।।

(अथर्ववेदे 5/19/06)

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे
राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्...

(यजुर्वेद 22/22)

अत्रापि ज्ञानशक्तेः क्षात्रशक्तेश्च महत्त्वं प्रतिपादितम् भार्गवे उभेऽपि

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शक्ती दरीदृश्येतेऽतः सर्वथा साम्प्रतिकं काव्यवस्तु कविनाऽत्रा गृहीतम्। कस्यचिदपि राष्ट्रस्य ज्ञानशक्तिक्षात्रशक्त्योः पारस्परिकं सामञ्जस्यं तस्य तेजस्वितायै नूनमेवानिवार्यं भवति। काव्यस्य प्रमुखे नायकेऽनयोः शक्त्योरवस्थितिरेकत्रा निभालयते। अस्यानुशीलनेन विद्वत्सु शासकेषु च द्वयोः शक्त्योः सन्निवेशःस्यादिति प्रेरणा लप्स्यते। महाकाव्येऽस्मिन् वशेषतः परशुरामस्य तेजस्वि रूपं प्रेरणाप्रदं सहृदयहृदयसंवेद्यं सरसं सरलञ्च वर्णितम्। कविर्भार्गवस्य परमो भक्तः, तस्य प्रारम्भिकं हार्दिकं किञ्चित्कथनं तथ्यमिदं पुष्णाति—

**येषां कृपाजलं धराम्बुसुवर्षणेन**
**प्राप्तव्यमर्थमधिगम्य नरः सुखी स्यात्।**
**याचेऽहमद्य भृगुवंशमणीन् प्रपन्नः**
**संसारसिन्धुमिह चोत्तरणाय सद्यः।**

**भूयान्मुदे परशुरामकृपाकटाक्षात्**
**पद्यप्रसूनरचिता मम भावमाला।**
**सन्तर्पणाय विदुषां च मनः सुखाय**
**मन्येऽर्पये सुमनसामथ भार्गवीयम्।।**

द्वात्रिंशता सर्गैर्विन्यस्तमिदं महाकाव्यम् कथावस्तु—अनुरुद्ध्य दीर्घाकारा लघ्वाकाराश्च सर्गा विद्यन्ते। लध्वाकारश्चतुर्थो सर्गः, यस्मिन् एकत्रिंशत् पद्यानि दीर्घाकारश्च अष्टादशः सर्गो यस्मिन्नेकनवतिःपद्यानि सन्ति। नवत्यधिकषोडश—शतम् (1690) पद्यानि महाकाव्येऽस्मिन् विद्यन्ते। विधादिशा महाकाव्यमिदं नात्र सन्देहः। महाकाव्यस्य लक्षणं तावन्मम काव्यतत्त्वमीमांसाया मेवं वरीवर्ति—

**सर्गैर्वृत्तैश्च बद्धं सहृदयहृदयाह्लादिशब्दार्थरम्यं**
**संवादैश्चोच्चशिल्पैः सततरसमयं ग्रन्थिमुक्तं समृद्धम्।**
**पात्रां स्याद्यस्य मुख्यं परमगुणयुतं लोकविख्यातवृत्तं**
**भव्यं लोकस्वभावं महदपि महतां तन्महाकाव्यमास्ते।।**

सर्गैर्विविधपौराणिकैर्वृत्तैः, समुपनिबद्धमिदं विशेषतस्तानि वृत्तानि

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गृहीतानि यानि भार्गवस्य जीवनतः सम्बद्धानि सन्ति। सम्वादाअपि प्रायशः प्राप्यन्ते, शिल्पमपि महाकाव्यानुरूपमेव, यथा प्रसङ्ग सर्वे रसा अनुभूयन्ते किन्तु समग्रतया वीरो रसः परिव्याप्तोऽतःतस्यैवाङ्गित्वमत्र विद्यते। वीरस्य धर्म–दयादिप्रसङ्गा अपि विद्यन्ते। ग्रन्थग्रन्थयो न सन्ति, अतः सुखावबोधकमेतत्। विविधवर्णनदिशा समृद्धमत्र भृगुवंशप्रमुखानां वर्णनं कृतमस्ति तथापि प्रमुखपात्रा रूपेण नायकत्वं परशुरामस्य विद्यते। परशुरामस्य वृत्तं लोकविख्यातं विद्यते, परशुरामा–दिग्विजयमिति महाकाव्यं शास्त्रिणा छत्रजूरामेण भार्गवराघवीयमिति महाकाव्यं स्वामिना श्रीरामभद्राचार्येण च प्रणीते विद्येते, स्फुटरूपेण रामाश्रितकाव्येषु परशुरामस्य प्रसङ्गास्तु सर्वासु रचनासु समुपलब्धा एव सन्ति। उदात्तचरिताकलनेन भव्यमिदं महाकाव्यम्। 'युक्तं लोकस्वभावेने' ति भामहेनापि महाकाव्य स्वरूप प्रतिपादने प्रोक्तं यस्य विकासो ध्वन्यालोके–औचित्य रूपेण 'अनौचित्यादृते नान्यदित्यादि–कारिकायां क्षेमेन्द्रस्यौचित्यविचारचर्चाया च विद्यते। इदमपि महाकाव्य–मौचित्यभरितं चकास्ति। आकार दिशा महदस्ति महता चरितेनाधारितम्, अतः कृतिरियं महाकाव्यमस्ति।

वस्तविन्यासदिशा भृगुचरितं च्यवनाख्यानं चादितश्चतुर्थसर्गं यावद् विद्यते, ततः क्रमशः शुक्राचार्यमार्कण्डेय–दधीचि–ऋचीक–जमदग्नीनां दिव्यानि चरितानि वर्णितानि सन्ति। परशुरामस्य विष्णोरवतारूपेण वर्णनमेकादशे सर्गे प्रारभ्यते अग्रिमेषु सर्गेषु भार्गवस्यैव चरितं विस्तरेणं पल्लवितम्। चरमेषु सर्गेषु श्रीपरशुरामस्य विद्योपासना रामेण सह तस्य साक्षात्कारः रामस्तुतिः चेत्यादि प्रसङ्गा वर्णिताः।

महाकाव्येऽस्मिन् प्रायशः प्रसिद्धानां लोकप्रियाणां छन्दसां प्रयोगः कविना व्यधायि। तद्यथा–वसन्ततिलकम् 1, 15, 23, 28, 31 सर्गेषु, इन्द्रवज्रा – 2, उपेन्द्रवज्रा 3, 4, 8, 13, मालिनी – 5, स्रग्विणी 6, 25, शिखरिणी 7, 32, द्रुतविलम्बितम् 9, 12, 14, 16, उपजातिः 11, 17, 18, 6, 27, पञ्चचामरम्–19, 31, वंशस्थम्–20, 29, वियोगिनी– 22, भुजङ्गप्रयातम् 14, वैश्वदेवी 30 सर्गे। एवं विविधैश्छन्दोभिरिदमुपनिबद्धम्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रत्येकं सर्गे चरमपद्यात्प्राक् छन्दःपरिवर्तनं कविना कृतम्। प्रायशो भावानुरूपमेव छन्दसां प्रयोगो दृश्यते। द्वादशवृत्तानां प्रयोगोऽत्र कृतो विद्यते।

महाकाव्यस्य भाषा सरला विद्यते, सामान्य संस्कृतज्ञाताऽपि काव्यभावावबोधे समर्थः। कवेरन्येषां पात्राणां च भार्गवविषयिणीरति– र्भक्तिरसकोटिं यावद्गता निभाल्यते। तद्यथा–

**नमामि शूलान्तकरं त्रिशूलिनं**
**नमामि कालान्तकरं कपालिनम्।**
**नमामि संहारहरं सदाशिवं**
**नमामि शान्ति प्रियमेव शङ्करम्।। (13.7)**

**यथा प्रभो! देवकुलाभिरक्षकः**
**भविष्यति त्वं न सुराभिवन्दितः।**
**तदा सृतिः पालयिता क ईश्वरः**
**त्वया विनाऽन्यः प्रभयेद्धविर्भुजः।। (13.9)**

सम्प्रदाय सद्भावोऽपि भक्तानां महत्प्रेरकं विद्यते गणेशस्य दन्तभङ्गे रुष्टां शिवां प्रति शङ्करो वक्ति–

**प्रियोऽद्य विष्णुरेषु भार्गवो गतोऽस्ति शैवतां**
**शिवात्मजोऽपि वैष्णवो भविष्यतीह ते सुतः।**
**हरेः शिवस्य भेदताऽपि निःसृता भविष्यति,**
**प्रसीद देवि! भार्गवे दयां विधेहि साम्प्रतम्।। (21.17)**

क्वचित्स्तोत्रानुभूतिर्भवति–

**कपालिन्! भूतेश! प्रमथगणनाथ! व्रतगते!**
**चिताभस्मोद्धूलिन! गलभुजगमालिन्! शशिशिरः।**
**वृषारूढ़! स्वामिन्! डमरुकरधारिन्! पशुपते!**
**मृतेर्मां पाह्येवं हर! हर! महादेव! शरणम्। (7.57)**

जमदग्नर्यदा पत्न्याः रेणुकायाः कदाचरणात्क्रुद्धः सन् पुत्रान् तद्वधायादिशति तदा परशुमेतराश्चत्वारो पुत्रा मृत्युं वृण्वते किन्तु मातृवधं

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गर्हितं मत्वा न कुर्वते, तेषां कथनेषु मातृभक्तिश्चरमामवस्थां यावद्गता। यथा–

**त्यक्ष्यामि देहमिममाशु न संशयोऽत्र**
**देवीं स्वमातरमिमां न तु घातयामि।**
**वह्नौ विशामि जलधौ च पतामि चोर्ध्वात्**
**तिग्मं पिबामि च विषं जननीं न हन्मि।। (15.57)**

लोक कल्याणाय दधीचिः स्वासून् जहाति–

**वशी वदान्यो वदतां वरिष्ठः**
**कृती मुनिर्ब्रह्मविदां वरेण्यः।**
**दधेऽखिलं ब्रह्मणि लीनवृतिः**
**जहावसून् लोकहिताय विप्रः।। (8.52)**

राष्ट्रकल्याण सर्वोपरि विद्यते भावोऽयं महाकाव्येऽस्मिन् विविधप्रसङ्गेषु कविना व्यक्तीकृतः–

**स्वदेशसेवार्थमिदं शरीरं**
**गृहं च वस्तूनि यदा जनानाम्।**
**भवन्ति राष्ट्रस्य समृद्धिरिष्टा**
**तदा भविष्यत्यभिवर्धमाना।। (8.56)**

एकतो मातृभक्तिरपरतश्च पितृभक्तिर्महीयसी दृश्यते–

**जगति यस्य तुतोष पिताऽविता**
**हृदि दधाति पितुर्वचनं च यः।**
**करगतं पुरुषार्थचतुष्टयं**
**भवति तस्य सुतस्य यशस्विता।। (16.27)**

भारतीयायां संस्कृतौ ये मानवीया धर्माः (कर्तव्यानि) निर्धारितास्तेषां पुष्टिर्मुहुर्मुहः महाकाव्येऽस्मिन् दृश्यते। अतिथिरूपेण समागतः कार्तवीर्यो जमदग्निं कामधेनुं याचते। जमदग्निं प्रति कामधेनुः तं भस्मीकरणाय निवेदयति तथाप्यतिथिसत्कारे दृढ़ं कृत सङ्ल्पो जमदग्निस्तथा न करोति वक्ति च–

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



**श्रुतं न केनापि हतोऽतिथिः स्यात्**
**सुदुर्विनीतोऽपि गृहागतश्च।**
**अतः क्षमो घातयितुं न देवि!**
**स्वधर्मतोऽहं प्रभवामि सत्यम्।। (18.75)**

एवं सर्वेषां सनातन संस्काराणां नित्यनैमित्तिकानुष्ठानानां वस्तु विन्यासे समायोजनं कविना कृतम्। राष्ट्रभावना भारतीया संस्कृतिश्च समग्रेऽपि महाकाव्ये राराजमाने दृश्येते। गवां कुलरक्षणविषये पद्यमेकं निभाल्यताम्–

**यदा यदा जनाः स्वभोगभावना समन्विताः**
**समर्पितं सदैव राष्ट्ररक्षणे गवां कुलम्।**
**महीभुजस्तपोवनात्प्रसह्य भोक्तुमुद्यताः**
**तदा तदा भविष्यतीह राष्ट्र संक्षयं ध्रुवम्। (19.10)**

एवं भार्गवकथामाध्यमेन राष्ट्रियताया भारतीयायाश्च संस्कृतेः प्रेरणात्मकं वर्णनं महाकाव्यकारस्य चरमं प्रयोजनं प्रतीयते। परशुरामस्य विलक्षणं समुदात्तं च चरितं सर्वातिशायितयाऽत्र विन्यस्तम्।

अलङ्काराणां प्रयोगः प्रायशो न दृश्यते। शब्दशक्ति दिशाऽभिधाया एव प्राधान्यं दृश्यते किन्तु वस्तु विन्यासे सहृदयहृदयाह्लादकाः प्रसङ्गा सर्वत्र प्राप्यन्तेऽतोऽलङ्काराभावोऽसह्यं नास्ति। विविध वर्णैनैरपि समृद्धमिदं महाकाव्यम् यथा प्रमद्वराचित्रम्–

**प्रमदमदन शीला सुन्दरी साथ मृद्वी**
**कृशकटितटकम्रा कान्तिमन्मध्यदेशा।**
**स्फुरति निखिलगात्रो यौवनं लोभनीयं**
**न्यपतदवनिमध्ये वर्णहीना गतश्रीः।। (5.15)**

अप्सरसो वर्णनम्–

**लसद्दृष्टेस्तस्यास्त्रुटितकचभूषाङ्कितसुमः**
**कटाक्षैरीक्षन्ती ललितवन्दना सूक्ष्मवसना।**
**मुनेरग्रे वायुर्हरति वसनं वन्धरहितं**
**यदा तस्या जातौ गतपटकुचावेव सघनौ।। (7.24)**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भक्तिभावस्य भक्तिरसस्य च परिपाकस्तु–महाकाव्ये सर्वत्रा दृश्यते। क्वचिदन्येऽपि रसा दृश्यन्ते, यथा करुणः –

**'मयि जीवति मे पिता मृतो**
**नहि दुःखाय ममास्ति केवलम्।।**
**सुरभिं प्रति तैर्नृपाधमै–**
**र्जनको मेऽद्य हतः प्रबाध्यते।।**

तथा च–

**मयिदारुणकर्मनिष्ठुर! प्रजहासि त्वमहो विधे! न माम्।**
**निहते जनके तपस्विनी मम माताऽपि दिवङ्गता क्षणात्।।**

भारतीय संस्कृति विमुखान् प्रति–अधिक्षेपोऽपि बहुधाऽत्र निभाल्यते–

**धिक् तां स्त्रियं पतिरथो विमुखश्च यस्या**
**धिक् जीवनं पतिविरोधसमन्वितं च।**
**धिक् तां विहाय पतिमन्यजनानुरक्तां**
**धिक् शङ्कते पतिरहो गृहिणीं स्वकीयाम्।। (15.22)**

यथास्थलं चतुर्दश विद्यासिद्धान्तानां पुनरनुगायनं पात्रचरितविकासे कथनोपकथनयोः प्रायोगिकं स्वरूपं च भार्गवीये मुहुर्मुहुर्दरीदृश्येते। यथा–

**'सहनौ भु न क्तु'– इति मन्त्रास्य पुनरुद्भावना–**

**सहाशनं नो सहभाषणं वा**
**सह प्रयाणं सह सन्निवासः।**
**न काऽपि यात्रा सह गोलकैश्च**
**कुर्वन्ति लोकस्य जनाः कदापि।।**

पौराणिककथानां संङ्केत प्रायशो लभ्यते। तद्यथा–

**उत्सङ्गतो जनिरभूदिह**
**नारदस्य ह्यङ्गुष्ठतो दक्षमुनिर्बभूव।**
**जातः क्रतुश्चकरतोऽथ विधेस्तनूजो**
**नाभेरभूद्व्रतधरो पुलहो महर्षिः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अक्ष्णोरथात्रिरपि कर्णभवः पुलस्त्यो
जातोऽङ्गिराऽपि मुखतो मनसो मरीचिः।
प्राणेभ्यः आविरभवच्च
वसिष्ठदेवस्त्वग्जनमभूरथ विधेश्च भृगोर्महर्षेः।।
(1.22–23)

काव्येऽस्मिन् पौराणिक कथाः प्रायशो मूलग्रन्थानुसारिण्यो विद्यन्ते। मौलिकं किञ्चित्परिवर्तनं कविना न व्यधायि। भृगुवंशस्य विशेषतः परशुरामस्य विकीर्णा कथा क्रमबद्ध रूपेणात्रा प्रस्तुता या जिज्ञासूनां सामान्यपाठकानां च कृते महनीयमुपायनं वरीवर्ति। अत्रा ममावेक्षणमेवं विद्यते–

भार्गवीयं महाकाव्यं पुराकल्प[1] निदर्शनम्।
नैकनायकसम्बन्धात्पूर्वार्द्धे च विलोक्यते।।
परक्रियोत्तरार्द्धेऽस्ति भार्गवो यत्र नायकः।
भृगोश्च जमदग्नेश्च रामस्य परशोः कथा।।
विशेषतोऽत्र विन्यस्ता चान्येऽपि भृगुवंशजाः।
वर्णिता ये पुराणेषु तेषां हि परमाद्भुतम्।।
चरितं चात्राः संक्षिप्य नव्यं रम्यं प्रबन्धितम्।
अङ्गीरसोऽत्र वीरोऽस्ति धर्मवीरो विशेषतः।।
सोऽपि भक्तितपरः प्रायो राष्ट्रसंस्कृतिभावकः।
विविधैर्वर्णनैर्युक्तं चाल्पालङ्कारसंयुतम्।।
श्रेष्ठजीवनमूल्यानां प्रेरकं राष्ट्रियं परम्।
भावनाभरितं शश्वद् भाषासारल्यमश्नुते।।
सुकुमारश्च मार्गोऽत्र वैदर्भी चापि तत्परा।
सन्नामिगौरवं येन महाकाव्यं परं कृतम्।।
भारतीजानकीस्तोत्रो शतकानि कृतानि च।
केशवे संस्कृते राष्ट्रे श्रद्धाञ्जलिसपादयोः।।

---

1. इतिहासगतिर्द्वेधा परक्रिया पुराकल्पाभ्याम्।।

काव्यमीमांसीयांराजशेखरः

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



संस्कृते राष्ट्रभाषायां शोधोपाधियुतो बुधः।
आचार्य श्री त्रिपाठी य उज्जयिन्यां निदेशकः।।

भार्गवीयं हि तत्काव्यं नवं रम्यं प्रकाशते।
राष्ट्रभावसमृद्ध्यर्थमानन्दाय च सत्तमम्।।

महाकाव्यमिदं नूनं पठनीयं सुधीजनैः।।
पाठ्यक्रमेऽपि संयोज्यं महाकाव्यमिदं बुधैः।
शोधोऽप्यस्मिन्भवेन्नूनं राष्ट्रमङ्गलकारके।।

नश्च प्रणय :—

काव्ये च शोधग्रथने प्रवीणः
प्राध्यापने शोधनिदेशने च।
सत्संस्कृति प्रेरक आर्यधर्मा
अभिनन्द्यसत्त्वो जयतात्त्रिपाठी।।

कृतमिति भूरिभाषितेन

**जाबलिपुरम्**

आचार्यः संस्कृत विभागे
जबालिपुररथ रानीदुर्गावती विश्वविद्यालयस्य
615, समदड़ियाग्रीन सिटी, माढ़ोताल,
जबलपुर–482002
दूरवाणी – 0761–2902404
चलन्ती – 09425383962

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# प्रथमः सर्गः

श्री र्यत्पदाम्बुजरजः परिसेवनाय,
नित्याश्रयं च विदधाति युगान्तरेषु।
पित्रर्षिदेवविधिशंभुभिरर्चिताय,
तस्मै नमो भृगुपदाङ्कितविग्रहाय।।1।।

व्रह्मण्यतो हरिपदं प[illegible]लभ्य ल[illegible]के
यो [illegible]सदि विभज्य पिनाकमुग्रम्।
सीतां श्रियं च निजचापमवाप भक्त्या
रामस्तुतः स शरणं मम रामचन्द्रः।।2।।

काशीपतिः सुरनदी–शशि–भूषितोऽपि
शेषेण भूषित जटाविचयः शिवोऽपि।
यस्यांघ्रि पद्मकरन्दनिषेवणाय
विद्यागुरुः कपिरभूत्तमहं प्रपद्ये।।3।।

या रावणादिशमनाय सुरार्थिताऽभूत्
या मन्थराश्रिततया वरदानबुद्धिः।
रामानुजाननगताऽपि च चित्रकूटे
सा शारदा भवतु मे रसनाग्रसंस्था।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्वाहञ्च मन्दमतिकः क्व कवेर्यशश्च
भृग्वन्वयार्णवमहो क्व च शेमुषी मे।
ध्यात्वाऽन्वयर्षिगुणरत्नमहं विलुब्धः
वाञ्छामि पुण्यपुरुषाचरितानि चेतुम्।।5।।

स्मृत्वा मुहुर्भृगुकुलं प्रभवानुवृत्तम्
मोहाच्च संरचयितुं सममून्मनीषा।
यास्यामि काञ्चिदुपहासगतिं विचिन्त्य
नत्वा गुरून् विरचयामि च भार्गवीयम्।।6।।

अज्ञानजा अथ ससर्ज च पञ्च वृत्तीः
विघ्नान् विलोक्य प्रथमं स तताप वेधा।
दध्यौ हरिं समधिगम्य मतिं सु–पूतो
भूयः समारभत मानसिकीं सिसृक्षाम्।।7।।

आद्यो मुनिः समभवत्सनकः कुमारः
पश्चात्सनन्दन – सनातनयोर्विसृष्टिः।
तुर्यो मुनिर्भुवि बभौ च सनत्कुमारः
कामोर्ध्वरेतस इमे जगतो विरक्ताः।।8।।

कौमारभावमधिगम्य भुवं भ्रमन्तो
गायन्त्यहर्निशमिमे हरये नमश्च।
लोकान् च पादरजसा सततं पुनानाः
श्री वासुदेवचरणानुरता जयन्ति।।9।।

लोके प्रजाः सृजत वाचमलं निशम्य
धातुर्न तेऽवृणनजायत रोषदोषः।।
बुद्ध्या निगृह्य च शमाय कृतः प्रयत्नो
जातो भ्रुवोरथ रुरोद शिशुः स रुद्रः।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यो नीललोहितवपुर्विधिरोषमूर्ति
नामास्पददंस पितरं समपृच्छदेवः।
ब्रह्माऽपि सान्त्वयनमुं निभृतं तुतोष
रुद्रो हि रोदनकरस्य चकार नाम।। 11 ।।

खं वायुमग्निमसुमिन्द्रियमंशुमन्तं
पृथ्वीं जलं च हृदयं शशिनं तपश्च।
स्थानानि धातुरुदितानि निवासहेतौ
रुद्रस्य साम्प्रतमपि प्रथितानि लोके।। 12 ।।

मन्युर्मनुर्महिनसश्च महाञ्छिवश्चा –
नेहा ऋतध्वज–धृतव्रत – वामदेवाः।
नामान्यतन्वननिशं भव उग्ररेता
रुद्रस्य सृष्टिकरणाय तथैव नार्यः।। 13 ।।

धीरम्बिका नियुतसर्पिरिलोशनोमा
दीक्षा सुधा जगति वृत्तिरिरावती च।
रुद्राण्य एव विधिना रचिताश्च सृष्ट्यै
रौद्री समारभत सृष्टिरतः पृथिव्याम्।। 14 ।।

सत्वादिभिः समकरोच्च निजैर्निदेशाद्
धातुः समाहितमतिर्विविधाः प्रजाश्च।
ता खादितुं भुवि रता अभवन् हि रौद्रीः
ब्राह्मीं विसृष्टिमवलोक्य विधिः शुशोच।। 15 ।।

आहूय मिष्टवचसा ह्यभिनन्द्य रुद्रं
ब्रह्मा न्यवारयदमुं नवसर्जनाभ्यः।
भूत्यै समादिशदथो तपसे च रुद्रम्
लोकोदयाय च हिताय सदा जनानाम्।। 16 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विष्णुश्च विश्वमभिपालयतीह नित्यम्
विश्वं विताय निखिलं त्वमसि प्रजेशः।
यद्यद् विभूतिसहितं तपसः फलं तत्
तस्मात्समाचर तपो भव सर्वपूज्यः।। 17।।

ज्योतिः परं सकलभूतगुहानिवासं
सर्वत्रगं शरणदं जगतामधीशम्।
विन्दन्ति विश्वभरणञ्च जनास्तपोभिस्
तस्मात्समाचर तपो भव सर्वनिष्ठः।। 18।।

रुद्रोऽभिगृह्य जनकस्य तपोनिदेशं
दावं गतस्तपसि गूढ़मतिर्महात्मा।
विद्यावबोधगुरुताञ्च समुह्य कालाद्
विद्यागुरुर्विजयते शिवशंकरोऽयम्।। 19।।

ध्यायन्नथ प्रजननञ्च विधिः सिसृक्षुः
शक्त्या युतो भगवतोऽभिससर्ज पुत्रान्।
लोकस्य संततिकरान् दशसंख्यकांश्च
येभ्योऽभिवृद्धिरभवज्जगतो विशिष्टा।। 20।।

अत्रिः पुलस्त्य पुलहौ क्रतुरङ्गिरा च
दक्षो मरीचिरथ नारद एव जाताः।
सञ्जीवनी व्रतधरो भृगु संज्ञकोऽभूद्
विद्यासु निष्ठित–वरिष्ठमतिर्वसिष्ठः।। 21।।

उत्सङ्गितो जनिरभूदिह नारदस्य
ह्यङ्गुष्ठतो जगति दक्षमुनिर्बभूव।
जातः क्रतुश्च करतोऽथ विधेस्तनूजो
नाभेरभूद् व्रतधरो पुलहो महर्षिः।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अक्ष्णोरथात्रिरपि कर्णभवः पुलस्त्यो
जातोऽङ्गिराऽपि मुखतो मनसो मरीचिः।
प्राणेभ्य आविरभवच्च वसिष्ठदेवस्
त्वग्जन्मभूरथ विधेश्च भृगोर्महर्षेः।।23।।

नाङ्गेभ्य एव जननं निखिलाच्च देहाद्
धातुर्बभौ भुवि मुनेश्चभृ गोर्विशिष्टम्।
योऽग्निं प्रशोध्य तपसाऽधिगतश्च विद्याम्
सज्जीवनीमथ मृतान् समजीवयच्च।।24।।

देवासुरैरपि सुरेशमरुद्गणैश्च
विप्रैः शिवाजहरिभिश्च महर्षिभिश्च।
यस्यान्वयस्य मुनयोऽथ समा बभूवुः
बोधैस्तपोभिरधिका अभिवंदिताश्च।।25।।

व्रह्मा पुरा वरुणयज्ञहुताशनाच्च
यं पावनं मुनिवरं प्रकटीचकार।
यस्मिन् कुले च्यवन– शुक्र– मृकण्डु मुख्या
जाताः स एव भृगुवंश इति प्रसिद्धः।।26।।

और्वेण वेदशिरसा जमदग्निना च
रामेण वत्समुनिनाऽप्नवता तथैव।
सावर्ण्य– शौनक– मृकण्डुसुतैः प्रसिद्धो
लोके सदा विजयते भृगुवंश एव।।27।।

सत्रे सरस्वति– तटे त्रिसुरे सु–योग्यः
को बोद्धुमेष मुनिभिः प्रहितो महात्मा।
निश्चित्य विष्णुमधिदेवमगात् सभां यः
सोऽयं सदा विजयते भृगुवंशकर्ता।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ब्रह्माणमेत्य भृगुणा न कृतः प्रणामः
पुत्रं विलोक्य विहिताचरणाद् विरक्तम्।
मौनं चुकोप भृशमाशु विधिर्भृगुश्च
यातः शिवं प्रति ततः सविशेषबुद्धिः।। 29।।

आराद् विलोक्य भृगुमागतमाश्रमं स्वं
शंभुस्तदा युगलबाहुविसारितः सन्।
उत्थाय भ्रातरममुं मिलितुं पुरस्ताद्
वेगेन चाचलदसौ शशिशेखरोऽपि।। 30।।

हालाहलं वहति कण्ठगतं शरीरे
धूलिं विलेपयति योऽथ चितागताञ्च।
नागावलीं च गजचर्म मुदा विधत्ते
धत्तूरसेवनरतः पिबतीह भङ्गाम्।। 31।।

लोलारुणाक्षिभृदयं भुवनं पुनाति
भूयो दिगम्बरतनुर्वसुदानशीलः।
अभ्यागतं सपदि भ्रातरमङ्कमालं
दातुं शिवः समुदियात् च भृगुं नयज्ञम्।। 32।।

त्वं तिष्ठ दूरमशुभानि तनौ विधत्से
न स्पृष्टुमेव विहितोऽसि दिगम्बरश्च।
स्नेहाञ्चितं शिवमयं च मुनिर्न्यषेधीत्
चुक्रोध शंभुरपि तिग्मविलोलनेत्रः।। 33।।

जग्राह शूलमतिरोषतया प्रधावन्
लेभे न चातिरभसाऽपि भृगुं जवेन।
हन्तुं क्षमो न भवति स्म शिवोऽवि शान्तः
देवत्रयी भृगुवरेण परीक्षिताऽभूत्।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वैकुण्ठमेत्य शयने रमया समेतं
विष्णुं ददर्श भृगुरेव पदाऽहनत्तम्।
उद्बुध्य विष्णुरपि तं ददृशे मुनीन्द्रं
पर्यङ्कतो धरणिमेत्य कृताञ्जलिश्च।।35।।

व्रह्मन् प्रसूनसुकुमार पदे त्वदीये
वक्षः स्थलेऽश्मसदृशे हननात् श्रमोऽभूत्।
पादौ विमृश्य नतिभिश्च तुतोष विप्रं
प्रीतो भृगुश्च हरिमेव वरं प्रमेने।।36।।

लक्ष्मीपतिं सकलदेवगणाधिपूज्यं
मत्वाऽऽययौ मुनिरयं खलु दीर्घसत्रम्।
व्यज्ञापयन्निजमतं मुनिवृन्दमध्ये,
धन्यो भृगुर्जयति देवपरीक्षकोऽपि।।37।।

'दिव्या' हिरण्यकशिपोस्तनया मुनीन्द्रं
प्रोद्वाह्य देवतनयान् रविसंख्यकांश्च।।
प्रासूत चान्यललना दुहिता पुलोम्नः
ख्यातिः श्रियं च्यवन– धातृ–विधातृकांश्च।।38।।

ज्येष्ठा सुता भगवती प्रबभूव लक्ष्मीः
नारायणं कृतवती स्वपतिं मनोज्ञा।
याऽऽम्भोधिमंथनभवा कमलालयाऽसीद्
नारायणस्य हृदयेऽधिनिवासशीला।।39।।

संजीवनीव्रतधरो दनुजाधिपूज्यः
दिव्यात्मजो निखिलवेदपुराणविज्ञः।
शुक्रः कविर्भगवतः कविरूपमासीत्
लोके चकास्ति धृततारकमूर्तिरद्य।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्री नैमिषारण्यगतः कदाचिद्
उग्रश्रवा सौतिरुपागतोऽभूत्।
पौराणिको द्वादशवर्षयाप्ये
सत्रे मुनीनामथ शौनकस्य।। 41।।

हुतवहशरणस्थम् शौनकम् सुप्रभाते
बुधजन विनतांघ्रिं पूजने दत्तचित्तम्।
मुनिजनकृतशङ्कश्चाश्रमस्थोऽपि सौतिः
कुलपतिमभिकांक्षन् तत्र पौराणिकोऽपि।। 42।।

ध्यात्वा परब्रह्म हुतं हुताशं
भास्वन्तमानर्च चकार चार्घम्।
श्रीशौनकः सौतिमुपेत्य वेद्यां
प्रीतःस्थितं स्वागत मुज्जहार।। 43।।

**।। इति भार्गवेण त्रिपाठिना मिथिला प्रसादेन विरचिते भार्गवीये भृगुचरितम् नाम प्रथमः सर्गः ।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# द्वितीयः सर्गः

श्री शौनकः वंशकृतां पितॄणां
सुश्रूषया वृत्तमुदारशीलम्।
श्रद्धान्वितः सूरिभिराश्रितानाम्
सौतिं पुराणज्ञमथाबभाषे।।1।।

संस्मृत्य संस्मृत्य च भार्गवाणाम्
दिव्यानि वृत्तानि मनोहराणि।
उग्रश्रवाऽनन्दितचित्तवृत्तिः
ध्याने स्थितः सन् मुमुदे रसज्ञः।।2।।

सद्यश्चरित्राणि विनम्य सौतिः
व्यासं च नारायणमादिदेवम्।
नत्वा नरं चाथ सरस्वतीञ्च
सद्वर्णनं चारभतानुपूर्वम्।।3।।

विद्या कुले यस्य विभाति दिव्या
संजीवनी जीवयितुं मृतानाम्।
सप्तर्षिलोकस्थितिरप्यवद्या
तस्मै भृगूणां पतये नमोऽस्तु।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भार्या मनोज्ञा दयिता पुलोमा
पत्युः प्रिया शीलपरायणाऽपि।
स्नातुं प्रयाते च भृगौ कदाचिद्
एकाकिनी गर्भवती स्थिताऽसीत्।।5।।

रक्षः पुलोमा प्रविवेश तूष्णीम्
पुण्याश्रमं वीक्ष्य भृगोः सु–भार्याम्।
दिव्यामनिन्द्यामथ चारुशीलाम्
जातो विचेता खलु हृच्छयेन।।6।।

मत्वाऽतिथिं तं विनता सुशीला
कन्दैश्च मूलैश्च फलादिभिश्च।
कृत्वाऽदरं साऽऽश्रमकार्यमग्ना
रक्षो रहो वीक्ष्य जहर्ष काले।।7।।

कामार्दितो राक्षसवृत्तिमूढः
कर्तव्यबोधोपहतस्तदानीम्।
तां संजिहीर्षुः मुमुदे स सम्यक्
पापाध्वगः को न जहर्ष पूर्वम्।।8।।

रोषात्कदाचिद्रुदतीं स्वकन्यां
मिथ्या पिताऽदादथ राक्षसाय।
पूर्वं वृतेयं च मया पुलोम्ना
पित्रा ततः सेयमतो ममैव।।9।।

कोपोक्तिमाकर्ण्य भृशं ततर्प
हर्तुं ततश्चाथ मनश्चकार।
गुप्तेन तत्रैव च रक्षसापि
पश्चाद् भृगुं प्राप्तवती पुलोमा।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वं मदीयाऽस्ति ततो भृगोश्च
भार्याऽभवन्मंत्रविधानपूर्वा।
ध्यायन् सदा किल्विषतां प्रयामि
हत्वा सुखी चाद्य भवामि लोके।। 11।।

हर्तुं प्रवृत्ते सति राक्षसे ताम्
कुण्डे हुतः पावक ऊर्ध्वरश्मिः।।
साक्षी चरित्रं किल दृष्टवांश्च
जाज्ज्वल्यमानं समपृच्छदेषः।। 12।।

सर्वत्र देवाहुतिलाभवृत्तिः
त्वं पावक! ब्रूहि यथा बभूव।
पूर्वं ममाथाद्य मुनेः पुलोमा,
कस्यास्ति भार्या मम वा महर्षेः।। 13।।

सूर्यः शशिर्द्यौरवनिश्च वारि
प्रभञ्जनो रात्रिरहो यमश्च।
धर्मश्च संध्ये हृदुभेऽग्निदेवः
सर्वाणि जानन्ति नृणां कृतानि।। 14।।

पित्रा पुरेयं रुदती प्रदत्ता
मह्यं यथाऽवेहि तथा त्वमग्ने।
देवाननोऽसीति च पृच्छकाय,
सत्यं वदाशु प्रविधेहि योग्यम्।। 15।।

पृच्छामि वह्ने! वद वा ऋतेन
दाम्पत्यकर्मण्यसि देवता त्वम्।
अस्याः पिताऽऽदादथ मां पुरैव
पश्चान्मुनिं सोऽनृतकारकोऽभूत्।। 17।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्तश्चरस्त्वं भुवि साक्षिभूतः
पुण्येषु पापेषु नृषु स्थितोऽसि।
सत्यं समाख्याहि वचो निशम्य
भार्यां जिहीर्षाम्यहमाश्रमाच्च।।18।।

भीतोऽनृताच्चापि भृगोश्च शापाद्
सप्तार्चिरेवं प्रविदूयमानः।
सत्यां गिरं मन्दमुवाच वह्नि
र्लोके भवेन्नानृतमर्चनीयम्।।19।।

क्रोधात्सुतां तां रुदतीं पिताऽस्या
रक्षोभ्य आदिष्ट इवाथ बाल्ये।
गुप्तेन तत्रैव वृता त्वयेयं
तुभ्यं न दत्ता विधिना स्वपित्रा।।20।।

प्रत्ता स्वपित्रा विधिना पुलोमा
भार्यात्वमाप्त्यै भृगवे वराय।।
साक्षित्वमग्नेरधिगम्य सेयं
वेदोक्तरीत्या मुनिना वृताऽस्ति।।21।।

भीतोऽपि वह्निर्गिरमाह सत्याम्
श्रुत्वा रुषाऽऽभूत्स वराहवेषः।
रक्षो मनोमारुतरंहसा तां
साध्वीं जहारातिबलावलेपात्।।22।।

गर्भो भृगोरेव च मातृकुक्षौ
सम्यक् स्थितोऽवेदथ तस्य कृत्यम्।
रोषाच्च्युतोऽभूद्रविवर्चसाऽऽक्तः
ख्यातश्च लोके च्यवनो बभूव।।23।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रक्षः पुलोमा ललनापहारी
पञ्चत्वमाप्तश्च्यवनार्चिदग्धः।
दुःखाकुलाऽऽदाय नवप्रसूता
ब्रह्माणमाप्ता भृगुनन्दनं तम्।।23।।

ज्योतिष्मता गर्भगतेन तेन
रक्षो विनाशं समपद्यताशु।
मन्ये तपोराशिरशेषदुष्टान्
नाशाय चालं भवतीति लोके।।24।।

वाष्पाकुलाक्षीं स्वसुतामनिन्द्यां
पुत्रान्वितां वीक्ष्य यदश्रुधारा।
जाता नदी तत्र वधूसराख्या
तुष्टो विधिस्तां परिसान्त्वयित्वा।।25।।

प्रत्यावृतश्चारुदतीं स्मितास्यां
सद्यः प्रसूतामथ जातकञ्च।
दृष्ट्वा चुकोपाशु भृगुः पुलोमां
पप्रच्छ वृत्तं हि यथा क्रमेण।।26।।

ज्ञात्वा च भार्यां मम कोऽपि रक्षो
हर्तुं प्रवृत्तो मरणाय लोके।
आचक्ष्व तत्त्वेन ददामि शापं
हर्त्तारमद्यैव विनाशयामि।।27।।

ऊचे पुलोमा मुनिमाशु पृष्टा
नीता यथा सा रुदती च तेन।
दत्ता हुताशेन यथा च वाचम्
सर्वं यथावृत्तमथाचचक्षे।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्युः प्रवृद्धश्च भृगोस्तदानीम्
विज्ञाय भार्याहरणस्य वृत्तम्।
त्वं सर्वभक्षी हुतभुक्च भूयाः
शापं निशम्याग्निरुवाच रुष्टः।।29।।

सत्यं महर्षे! विहितक्रियस्त्वम्
जानासि धर्मादिविधिं विधिज्ञः।
धर्मानुरक्तस्य यथानुपृष्टम्
सत्यं ब्रुवाणस्य न मेऽस्ति दोषः।।30।।

जानान एवं यदि कोऽपि साक्षी
पृष्टो वदेदन्य इवापि लोके।
पूर्वान् परान् सप्त कुले निहन्याद्
पापान्वितः सन् नरकं प्रयाति।।31।।

मान्याश्च मे विप्रगणाः सदैव
शापं न तेभ्यः प्रहिणोमि यस्मात्।
यज्ञेषु सत्रेषु तथाग्निहोत्रे
ष्वाहूयमानो विदधामि होमान्।।32।।

संतर्पिता वै पितरश्च देवाः
प्राप्ताहुतीरग्निमुखा भवन्ति।
चेत्सर्वभक्षोऽद्य कथं हि तेषाम्
लोके भविष्यामि मुखेन पूतः।।33।।

विप्राग्नि होत्रेषु मखक्रियासु
सत्रेषु चाग्निर्विमुखो बभूव।
स्वाहा स्वधाकार बषट्विहीना
जाताः प्रजाश्चाथ विदुःखिताश्च।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शप्तोऽग्निदेवो विरतो बभूव,
धर्मक्रियालोपयुतश्च लोकः।
देवाः प्रजाश्चापि विदूयमानाः,
ब्रह्माणमभ्येत्य सशंसिरे च।।35।।

ब्रह्माऽग्निमाहूय बभाण शान्त्यै
धर्मक्रियाणामभिवर्तकस्त्वम्।
येनाग्निहोत्रादिविधेश्च लोपो
न स्यात्प्रवर्तस्व तथा हुताश !।।36।।

मा सर्वभक्षत्वमथो प्रयाहि
त्वं सर्वदेहेन शिखिन् तथापि।
क्रव्यादमूर्त्या भव सर्वभक्षी
मन्ये ह्यपानादिभिरस्य शुद्धिः।।37।।

शापं स्वतेजोभिरलं भृगोस्तं
सत्यं विधेह्यात्मन इष्टभागम्।
आस्ये हुतं देवगणाय भागं
गृह्णीष्व लोकश्च भवेद् विशोकः।।38।।

सूर्यांशुभिः स्पृष्टमलं शुचित्वं
निर्दग्धमग्नेश्च यथा तथाऽभूत्।
अर्चिष्मता देवमुखं च शापं
भूत्यै धृतं मोदयुताश्च विप्राः।।39।।

देवाश्च लोका ऋषयः समग्राः
प्रीतास्तथा वह्निरपि प्रसन्नः।
क्रियाश्च सर्वा विधिना प्रवृत्ता
भृगोश्च शापः शमितोऽपि शान्तः।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तेजो भृगोर्मातुरथोदरेऽपि
रक्षः प्रभावं सहते न किञ्चिद्।
तेजोभिरिद्धश्च्युत एव लोके
पुत्रो भृगोस्तच्च्यवनाभिधानः।। 41।।

च्यवनचरितमिष्टं चित्रमाश्चर्यपूर्णम्
भृगुतनयविशिष्टं देववृन्दैरपीष्टम्।
तपसि सततलीनं भूपवृन्दैरुपास्यम्।
श्रवणमनन पाठैः शंप्रदं वर्णयामः।। 42।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये च्यवनजननम् नाम द्वितीयः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# तृतीयः सर्गः

अथैकदाऽरण्यगता सुकन्या
मनोर्भवस्यात्मभवा मनोज्ञा।
चचार शर्यातिनृपेण पित्रा,
समं प्रपेदे च्यवनाश्रमं सा।।1।।

वने भ्रमन्ती मुदमावहन्ती
लतासु वृक्षेषु विनोदयन्ती।
विलोकयन्ती सखिभिर्वृता सा
ददर्श वल्मीकगतं प्रकाशम्।।2।।

विलोक्य वल्मीकभवं सुरन्ध्रं
शुचिस्मिता दैवधिया च बाला।
प्रचोदिताऽविध्यदलं सुकन्या
मुनेश्च नेत्रे खलु कण्टकेन।।3।।

तपोधनं तं तपसि प्रलीनं
सु–चक्षुषी यस्य विभायुते स्तः।
तनुं च वल्मीकमयं महर्षेः
न वेद मुग्धाऽकृत पापकर्म।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



असृक् प्रवाहः प्रसृतः पुरस्ताद्
प्रभेदनान्नेत्रयुगस्य चर्षेः।
सविस्मयः सैन्यशकृन्निरोधो
नृपः प्रपेदेऽपि च मूत्ररोधः।।5।।

कृतं भवद्भिः क्वचिदत्र पापं
मुनेः कथञ्चिद् भृगुनन्दनस्य।
विलंघितं चाचरणं कदाचित्
प्रदूषितं वाऽश्रम संविधानम्।।6।।

नृपेण पृष्टा सभया सुकन्या
न्यवेदयन्नेत्रविभेदनं तत्।
असृग्प्रवृत्तिश्च यथा बभूव
ससाध्वसोऽभूच्च पिता निशम्य।।7।।

तपोरतं तं च्यवनं समेत्य
ननाम वाग्भिश्च नृपः प्रतोष्य।
सु–कन्यया नेत्रयुगं विदीर्णम्
कृतं यदज्ञानतया क्षमस्व।।8।।

प्रसादितः प्रार्थनया तपस्वी,
शनैश्च वल्मीकगतो महर्षिः।
मुनेरभिप्रेतमवेत् सुकन्याम्
प्रदाय शर्यातिरगात् पुरं स्वम्।।9।।

प्रकोपिनं तं च्यवनं पतिं स्वं
मनोहरा प्राप्य मनोगतज्ञा।
सदानुकूलाचरणं चकार,
ननन्द नित्यं धंवला धवेन।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



धवानुकूलाचरणैकवृत्तिः
भृशं तुतोषाशु धवं सुकन्या।।
मुनिर्जरां हातुमियेष सम्यक्
भवेद्गतार्था युवतिश्च येन।। 11।।

अथैकदाऽऽजग्मतुराश्रमं तौ
सुसत्कृतावश्वियुगौ सु–वैद्यौ।
वयोऽभिकाङ्क्षन् मुनिराचचक्षे
प्रदेहि मह्यं ललनाभिरिष्टम्।। 12।।

भवन्ति यं वीक्ष्य रता रमण्यो
ललन्ति यं प्राप्य मुदा च नार्यः।
भजन्ति यं वै प्रमदा मदेन
वयोऽनुरूपं च मुनिर्ललास।। 13।।

न सोमपानं मिलतः युवाभ्याम्
मखेषु दास्यामि तथापि भागम्।
जरायुतं मां नवयौवनेन
युतं क्रियास्तम् भवरोगवैद्यौ।। 14।।

ननन्दतुस्तावभिनन्द्य वाचं
भिषक्तमावूचतुराशु तस्मै।
निमज्जतां भार्गव! सिद्धसंघैः
विनिर्मितेऽस्मिन्नुदके समन्तात्।। 15।।

कुदर्शनोऽसौ धमनि प्रकीर्णो
वलीयुतोऽ सौ पलितोऽतिवृद्धः।
कृशं शरीरेण जरां दधानः
ह्रदं प्रविष्टो च्यवनो महर्षिः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुदर्शनोऽभूद्युवतिष्वभीष्टो
बली सुकेशोऽति युवाऽपि कान्तः।
दृढं शरीरेण बभौ क्षणेन
ह्रदप्रवेशाद्रुचिराकृतिश्च।।17।।

ह्रदात् समुत्तस्थुरमेयमानाः,
सुवाससः पद्मपरागवर्णाः।
त्रयो वयो रूपधियः समानाः,
किरीटिनः कुण्डलिनस्तथैव।।18।।

नितम्बिनी सा सुभगा सुकन्या
सम–प्रभा–रूप–गतेषु तेषु।
अजानती स्वां पतिमेव दृष्ट्वा
गताऽऽश्विनौ तौ शरणं च साध्वी।।19।।

प्रतोषितौ तौ भिषजौ तयाऽपि
पतिव्रता– धर्म– विषक्तया च।
प्रदर्श्य तस्यै च्यवनो महर्षि
र्गतौ स्वलोकं च तदा तथैव।।20।।

पतिं युवानं कमलायताक्षी
पतिव्रता–धर्म फलं च लेभे।
रेमे मुनिश्चापि सुकन्ययैव
न चापि कान्तत्वमलं जहाति।।21।।

क्षयं सुभोगाद् भवतीह लोके
रसायनाद्याति वयो नवत्वम्।
निमज्जनात्सिद्ध कृते ह्रदेऽभूत्
सुभोगयोग्यं च मुनेःशरीरम्।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुस्तकालय
180675
गुरुकुल कांगड़ी विश्वविद्यालय

गखं चिकीर्षन् स्वगणैरुपेतो
ययौ च शर्यातिरथाश्रमं तम्।
कृतप्रणामाञ्च सुखं विलोक्य
सविस्मयःप्राह रुषाऽपि कृच्छ्रात्।। 23।।

813
त्रिपाठी = ना

चिकीर्षितं ते किमिदं सुकन्ये !
प्रवञ्चितो लोकनमस्कृतोऽपि।
मुनिर्विहायार्कसमं कमन्यं
पतिं युवानं भजसे त्वमेवम्।। 24।।

सतां कुलेऽभूदिह ते प्रसूतिः
गृहेऽपि संस्कारयुते निवासः।
तथापि जारानुगता मतिस्ते
कथं प्रवृत्तेति दुनोति चित्तम्।। 25।।

पितुश्च भर्तुश्च कुलं विनाश्य
गतत्रपा या स्वपतिं विहाय।
भजत्यनार्या मदनाय जारं
न संमता स्यादिह वाऽन्यलोके।। 26।।

तपस्विने त्वं हि मया प्रदत्ता
विवाहितोऽसौ भरणाय लोके।
त्वया जराग्रस्तमपास्य नूनम्
पितुः कृता भूरि तिरस्कृतिञ्च।। 27।।

ब्रुवाणमेवं पितरं सुकन्या
न्यवेदयद्यौवनरूपलाभः।
भिषग्वराम्याञ्च यथा बभूव
महर्षिणेऽस्मै भृगुनन्दनाय।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शुचिस्मिता सा पितरं बभाण
मखेषु सोमं मुनिना प्रदेयम्।
भिषग्वराभ्यामभविष्यदेव
यथा लभन्तेऽन्यसुरास्तथैव।।29।।

निशम्य वृत्तं च्यवनस्य सर्वम्
सविस्मयः प्रीतमना नृपोऽभूत्।
परिष्वजन्नात्मभवामनिन्द्यां
भृशं जहर्षाथ मुनिं ववन्दे।।31।।

इयाज शर्य्यातिरथापि सोमं
ददौ च भागं सुरवैद्यकाभ्याम्।
अयाजयत्तं च्यवनोऽप्रमेयः
स्वतेजसा सोममदादुभाभ्याम्।।32।।

न सोमपानाय भवन्ति योग्याः
कदापि वैद्यास्त्रिदशेषु सत्सु।
चुकोप विज्ञाय मतिं महेन्द्रो
वधाय शर्यातिनृपस्य चैच्छत्।।33।।

प्रगृह्य हस्ते कुलिशं विमोक्तुं
समुद्यतो पाकरिपुर्बभूव।
यदा करं तं कुलिशेन सार्धम्
मुनी रुषा व्यष्टभताशु यज्ञे।।34।।

निवारितो देवपतिस्तदानीं
महर्षिणा श्रीच्यवनेन कामम्।
बभौ नृपस्यापि मखं सुपूर्णम्
भिषक्तमौ तौ पपतुश्च सोमम्।।35।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



बहिष्कृतावश्वियुगौ च वैद्यौ
न सोमपावाहुतिवर्जितौ यौ।
प्रतिष्ठितौ तौ च्यवनप्रभावाद्
बभूवतुर्यज्ञभुजौ समन्तात्।।36।।

इत्थं बभौ सुरपतेश्च करोऽपि मुक्तः
तावश्विनावपिबतामपि सोमभागम्।
जातो युवा गतवयश्च्यवनो महर्षिः
शर्य्यातिरस्य तनया ऽपि भृशं जहर्ष।।37।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये च्यवनप्रभावो नाम तृतीयः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# चतुर्थः सर्गः

अथैकदाऽयं च्यवनस्तपस्वी
सुतीर्थराजे मुनि भानुपुत्र्योः।
तपः प्रयागे कृतवांस्मिण्यां
वसन् जलान्तर्जलजैःसमेतः।।1।।

सदा तपोलीनमतिस्तितिक्षुः
जलाधिवासी व्रतमादधानः।
निनाय स द्वादशवर्षकालम्
मुनिर्हरिं ध्यायननन्तमूर्तिम्।।2।।

क्वचिन्मुनिः काष्ठवदास्थितोऽप्सु
जपन् स्वपन् चिन्तयनिष्टदेवम्।
प्रभुं स्मरन् यो जड़वद् स्थितोऽभूद्
वसन् जले दीर्घतपश्चकार।।3।।

जले निवासाज्जलचारिमैत्री
कृताऽनुरागाच्च्यवनेन तत्र।
उवास मत्स्यादिभिरेव तोये
ततार लक्ष्यैकरतस्तपस्वी।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विभौ सदा लीनमतिः स सेहे
प्रवाहवेगान् सुरनिम्नगायाः।
तथैव चादित्यसुताप्रवेगान्
बभूव चाशेषसहो महात्मा।।5।।

निषादजालान्तरितः कदाचिद्
मुनिश्च मीनैः सह बन्धनेऽभूद्।
क्षमापयन् ते, प्रणताश्च बुद्धवा
न मोक्षमिच्छत्यथ भार्गवोऽसौ।।6।।

वसन्ति तोये सुहृदो झषाद्याः
सुपाशबद्धा इह धीवरैस्ते।
मृतिर्भवेद्वा नवजीवनं मे
सहानुवत्स्यामि च तैर्जलीयैः।।7।।

चुकोप दाशेभ्य उदीर्णरोषः
भिया निषादाश्च पदोर्निपत्य।
समीडिरे तं च्यवनं हि पाशै
रबोधतो बन्धनमाशशंसुः।।8।।

क्षमस्व नोऽज्ञानतया महात्मन्
तवायमस्माभिरभूद्धि बन्धः।।
कदापि तेजोव्रतिनां विशिष्टं
भवादृशं वीक्ष्य न नोऽसदिच्छा।।9।।

विहाय तान् जालगतान् सुमीनान्
स्वजीवनं योग्यमयं न मेने।
यदा तदा ते सभया निषादा
नृपं समूचुर्नहुषं स्ववृत्तम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भृगोः सुतस्याचरणं दिदृक्षुः
निशम्य राजाऽपि समुत्सुकोऽभूत्।
गतः प्रयागं च्यवनं प्रणम्य
विमोक्तुमिच्छन् विनतो जगाद।।11।।

मुने! तवार्चां विदधामि विप्रै–
रमात्यवर्गैः सह संगमेऽस्मिन्।
विलोक्य जालस्थमहं न शर्म
लभे दयालुर्भव नौमि च त्वाम्।।12।।

निशम्य वाचं नृपतेरवोचद्
स जालबद्धश्च्यवनो नरेशम्।
विमोक्तुमिच्छस्यथ देहि मूल्यम्
ममाद्य कैवर्त्तजनेभ्य इष्टम्।।13।।

द्विजैरमात्यैरभिमंत्रयित्वा
शतं सहस्रं ह्ययुतं च कोटीः।
समुद्यतो मूल्यमृषेः प्रदातुं
यदा तदाऽयं च्यवनोऽब्रवीत्तम्।।14।।

नरेश! जानासि कृताकृतं त्वं
करोषि च न्याय्यमिह प्रजानाम्।
न विप्रमूल्यं विहितं त्वयाद्य
द्विजा न मुद्राभिरहो समानाः।।15।।

नृपः समग्रं निजराज्यमृद्धम्
इयेष दातुं च निषादकेभ्यः।
तथापि नामन्यत स स्वमूल्यम्
मुनिर्विचिन्त्याथ शुशोच दीर्घम्।।16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ततो फलाशी तपसेद्धमूर्तिः
द्विजो नृपं प्राप विवेद वृत्तम्।
प्रसादनं तुल्यपणेन कर्तुम्
प्रतोषितोऽसौ भृगुनन्दनस्य।। 17 ।।

प्रणम्य मूर्ध्ना द्विजमेव राजा
प्रपाहि मां भो! च्यवनादुवाच।
रुषा च राज्यं सकलं विनश्येद्
यथा न मे स्यादनुशाधि मां त्वम्।। 18 ।।

द्विजेषु भक्तिं च नृपस्य वीक्ष्य
द्विजोत्तमः सान्त्वयनेव वाक्यम्।
नृपोत्तमं तं नहुषं जगाद
तपोधनाः सन्ति नृपैश्च पूज्याः।। 19 ।।

क्षितीन्द्र! मा भैस्त्वमलं मुनेश्च
कुलं द्विजानां च गवां समानम्।
द्विजेषु मंत्राश्च हवींषि गोषु
प्रतिष्ठिताः प्राक् च पितामहेन।। 20 ।।

अमूल्यता गोश्च महीसुरस्य
भवत्यतो दुःखमिहानुभूतम्।
त्वयाऽद्य मूल्यं च्यवनस्य देयं
सुखेन गोदानमवाप्नुहीष्टम्।। 21 ।।

ततो द्विजैः सार्द्धमुपेत्य राजा
प्रयागतीर्थे च्यवनं महर्षिम्।
ननाम भक्त्या निजगाद नम्रो
मुने! स्वरोषाद् विनतं प्रपाहि।। 22 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



करोमि गोदानमहं प्रसन्नो
निदेशतस्तेऽद्य विमुक्तयेऽपि।
क़रोतु चाज्ञां द्विजवर्य! चास्मै
नताय शीघ्रं भव वीतपाशः।। 23।।

गुरोस्तवाज्ञां परिहृत्य नाहं
निषादकेभ्यश्च ददामि धेनुम्।
न चेद्विमुक्तो भवितासि पाशाद्
तदा न गोदानमहं करिष्ये।। 24।।

जहर्ष वाक्यं च मुनिर्निशम्य
सगद्गदः प्राप्य सुलोमविक्रियाम्।
द्विजो गवा क्रीत इवाथ बुद्ध्वा
नृपं विनीतं समुवाच सद्यः।। 25।।

स्वाहा स्वधाकारविधिश्च तत्र
लक्ष्मीश्च यज्ञादिविधिश्च नाकः।
गोष्वेव नित्यं परिनिष्ठिताश्च
राजन् सु–गाः पालय पूजय त्वम्।। 26।।

इत्थं गवां द्विजपतेः समतां विधाय
लोके स्वमूल्यमपि यत् च्यवनेन लब्धम्।
तेनाद्य गौरथ महीसुर एव वन्द्यो
जागर्ति यज्ञविधिपूर्तिकृते समन्तात्।। 27।।

तोयाधिवासमपि वारिचरव्रतञ्च,
सद्यः समाप्य मुदितश्च्यवनो बभूव।।
धेनोः समं महिसुरेण विधाय साम्यम्
लब्ध्वा फलं च तपसो मुमुदे सुकन्या।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यो लोकशान्तिमभिलक्ष्य करोति यागम्
विद्यां तपःश्रुतिमुपास्य च लोकसेवी।
दुग्धं घृतं च नवनीतमथ प्रजार्थम्
या यच्छतीह न कथं समताऽनयोः स्याद्।। 29।।

मैत्री भवेद्यदि सतां जलवासिनां वा
नो मन्यते पृथगहो मुनिरल्पमात्रम्।
मीनैः समं निवसनाद् च्यवनो वरीयान्
मैत्रीधिया स्वमरणं वरमेव मेने।। 30।।

संप्राप्य चाश्रमगतं च्यवनं सुकन्या
सद्यौवनस्य फलमाप्तुमियेष मुग्धा।
विज्ञाय कामचरितं निजभार्ययोत्थम्
रेमे भृशं मुनिरहो तरुणस्तपस्वी। 31।।

**।। इति भार्गवेण त्रिपाठिना मिथिला प्रसादेन कृते भार्गवीये महाकाव्ये च्यवनचरितं नाम चतुर्थः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# पञ्चमः सर्ग

च्यवनविहिततेजो धारयन्ती सुकन्या
प्रमतिमतिमतिज्ञञ्चासुनोत्प्राप्तकाला।
तत इह रुरुनामा सूनुरेको घृताच्याम्
समजनि भृगुवंशे तादृशस्तत्त्ववेत्ता।।1।।

प्रमदयुतवरायामास्थितो गर्भ इष्टो
रुरुतनयडदारः सत्त्वनिष्ठो विजज्ञे।।
महति तपसि लीनो जन्मतोऽभूद्यशस्वी
शुनकमुनिरनेकैर्वन्दितः सर्वलोके।।2।।

जगति पृथुल कीर्तिश्चापि गन्धर्वराजो
मदनशरनिविष्टोऽभूच्च विश्वावसुर्वै।
सुरयुवतिरपीयं मेनका तं सिषेवे
व्यधृत च नवगर्भ कालतश्चाथ जज्ञे।।3।।

तपसि बहुलविद्यास्वेव निष्ठो वरिष्ठो
जगति हितविलीनः स्थूलकेशो महात्मा।
निवसति कृतवासः स्वाश्रमे पूर्णकामः
व्यसृजत निजगर्भं मेनकाऽऽराच्च तस्य।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुरतरतमशेषं कामयन्त्यः सकामाः
कमपि पुरुषमिष्टं कामलीलास्त्रियश्च।
दधति सुहुतगर्भान् निर्दया भोगबुद्ध्या
जहति रतिफलं तं देहविक्रीडनार्थम्।।5।।

मुनिरपि गततीरो दृष्टवान् निम्नगायाः
नवशिशुमपि सद्यो जायमानां च कन्याम्।
सुरनिभतनुकान्तिं विभ्रतीं प्राक् विसृष्टां
विजनवनगतां तां वल्लरीं वृक्षहीनाम्।।6।।

भवति जगति कश्चित्पृच्छको नैव यस्य
रचयति नहि कश्चिद् यत्कृते क्षेमयोगौ।
भवति सपदि कश्चिद् रक्षको नैव यस्य,
तमिह झटिति पातुं प्रोद्यताः सन्ति सन्तः।।7।।

अशरणमिह वीक्ष्य स्थूलकेशस्तपस्वी
ह्यनयदपि च कन्यां स्वाश्रमं पालनाय।
सुभगतनुविशिष्टा निर्मला वर्द्धमाना
ह्यनुसमयमियं सत्संस्कृता जातकाद्यैः।।8।।

निजमतिगुण रूपैरुद्यताऽन्येभ्य इष्टा
प्रमुदितवदनाऽसौ श्रेष्ठतां स्त्रीषु याता।
अवहदमलधर्मान् सुन्दरी यौवनस्था
प्रमदगणवरिष्ठाऽभूदलं दर्शनीया।।9।।

रुरुरुरुतपसोद्यत्प्रेत्य तं स्थूलकेशं
निवसति वरकन्याऽऽप्याश्रमे सा च यत्र।।
मदयति मदनाग्निस्तं रुरुं कन्यकोत्कम्
उपहतमतिरासीत्कामुकोऽयं वनान्ते।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



युवतिजनमनोज्ञां वीक्ष्य तां यौवनस्थां
भवति विषमबाणस्यापि सम्यक् प्रचारः।
युवतिषु युवकानां सन्निधौ कामवृत्तिः
भवति मदनवृत्तिः कामिनां चापि चित्ते।। 11।।

मदनमदनिविष्टो मोदमग्नस्तदाऽसौ
प्रमतिमतिमतिस्थं भार्गवं भूमिदेवम्।
पितरमपि मनोज्ञः श्रावयामास वृत्तम्
सखिभिरथ सुशीलस्तत्सदाचारपूर्णः।। 12।।

प्रमतिरपि ययाचे स्थूलकेशं सुकन्यां
तनयकरनिपीड़ं निश्चितं भे भगेऽभूत्।
सुभग–सुमतिपूर्णा शुभ्रवर्णा मृगाक्षी
क्षपयति निजकालं तं पतिं चिन्तयन्ती।। 13।।

प्रमदनिहितपूर्वा सेवमानो वरान्तां
रतिमिव कमनीयां संस्मरन् सर्वदाऽयम्।
प्रमतितनुभवोऽभून्मूर्च्छितो वीतबुद्धिः
मदनकृतनिवासः कस्त्यजेन्नो मतिं स्वाम्।। 14।।

रुरुमुरुगुणशीलं कामयन्ती किशोरम्
ललितरमणमुच्चैर्लालयन्ती रसज्ञा।
स्मरति सततमिच्छा–संगतं तं रतिज्ञम्
रमयति मदनार्ता नो क्षणं याप्यमाना।। 15।।

मनसि मदनलीलाक्रीडनं चास्ति यस्या
उरसि सुरतभावप्रार्थनं यत्र सम्यक्।
वयसि मदन मूर्ती राजते सद्विलासै
भवति न ललनाऽसौ नानुरक्ता कथंस्वित्।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



उरगमथ शयानं लक्षितं नैव तन्व्या
सखिजनगतखेलाकर्मणि व्यापृता सा।
चरणहतितयाऽसौ मूर्च्छितो रोषमूर्तिः
भृशमदशदथांघ्रौ कालनुन्ना मृतैव।। 17।।

प्रमदमदनशीला सुन्दरी साऽथ मृद्वी
कृश–कटि–तट–कम्रा कान्तिमन्मध्यदेशा।
स्फुरति निखिलगात्रे यौवनं लोभनीयं
न्यपतदवनिमध्ये वर्णहीना गतश्रीः।। 18।।

स्वजन कृतविषादा कीर्णकेशा शुभाङ्गी
गरलकृतविमोहा चेष्टमाना पृथिव्याम्।
कमलमसृणदेहा पद्मकान्तिर्मनोज्ञा
मदयति नतगात्रा कामिनां प्राणहीना।। 19।।

अभिययुरसुहीनां दृष्टुमाश्रुत्य शीघ्रम्
रुरुरपि सह पित्रा कौणकुत्स्यार्ष्टिषेणौ।
कुशिक–कठ–समेतो गौतमः श्वेतनामा
चकितनयनपूर्णः स्थूलकेशश्च तत्र।। 20।।

सपदि ललितशीलां वीक्ष्य तां प्राणहीनां
रुरुरतिकरुणाभिः पीडितोऽभूद्द्विजानाम्।
सदसि मुनिवराणां सम्मुखे रोदनोत्को
मनसि कृतनिवासां पश्यनार्तो रुरोद।। 21।।

करुणभरितभावश्चिन्तयन् सर्पदष्टाम्
गहनवनगतोऽ सौ शोकपूर्णो शुशोच।
विलपति दयितां तां संस्मरन् चेष्टमानः
रुरुरपि ललनार्थं विह्वलोऽभूद विषण्णः।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृतगुरुजनसेवाऽराधितोग्रा तपस्या
यमनियमसमुत्थं सद्व्रतं दानकर्म।
यदि सुकृतफलं मे संचितं पुण्यमिष्टम्
सपदि भवतु युक्ता तेन जीव्यात् प्रिया मे।। 23।।

भगवति मम भक्तिर्यावती स्याच्च लोके
यदपि कृतमशेषं पूर्वकालेऽपि पुण्यम्।
तदिह भवतु तन्व्या जीवितार्थं समन्ताद्
रुरुरिह बहु रोदित्याशया जीवनस्य।। 24।।

विलपति रुरुदेवेऽरण्यगो देवदूतः
प्रवदति कृतदुःखं मा शुचो व्यर्थमेव।
गतवति सति चायुष्यद्य रोदीर्वृथा त्वम्
कथमपि ललनेयं जीवितुं नो समर्था।। 25।।

यदि भृगुतनय! त्वं ह्यायुषोऽर्द्धं प्रदातुम्
निज हृदि निवसन्त्या जीवनार्थं समर्थः।
तदिह मृतशरीरा जीविता सा भवित्री
सपदि कथनतोऽवोचदिष्टं रुरुस्तम्।। 26।।

श्रृणु! सुरवरदूत! स्वायुषोऽर्द्धं ददिस्ये
सुर–युवति–सुकन्या–हृच्छयव्याकुलोऽहम्।
ललित वदन रूपालंकृताऽहं सकामः
सपदि भवतु चाग्रे सुस्मितास्या सजीवा।। 27।।

दिवमथ सुरदूतोऽगाच्च गंधर्वराजः
दिवि यममभियाचेते स्म धर्मं भृतायाः।
भुवि रुरुललनाया जीवनं धर्मराजः
सपदि च समदादायुषोऽर्द्धेन तस्य।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जन इह शयनान्ते बोधितः स्याद्यथाऽत्र
वरतनुरथ कन्या प्रोत्थिताऽभूच्छुभाङ्गि।
अरमदपि तयाऽयं भोगवृत्ती रुरुश्च
मुनिरपि ललनार्थं ह्यायुषोऽर्द्धं ददाति।। 29।।

रुरुरिह गतशोकश्चोपयेमे वराही
मरमत बहुकालं भार्यया सार्द्धमेवम्।
भवति न च सुभोगात् तृप्तिरिष्टा कदापि
हुतभुगिव सुवृद्धिर्जायतेऽथेन्धनैश्च।। 30।।

प्रियविरहकरान् जिह्मगान् वीक्ष्य कोपात्
प्रहरणमभिगृह्याप्यातुरस्तान् निहंतुम्।
रुरुरकृत विषादश्चिन्वतीष्टं भुजंगान्
प्रहरति च न तुष्टः प्राद्रवत् क्वाप्यरण्यम्।। 31।।

वनमयमभियातो डुण्डुभं वृद्धसर्पम्
सपदि कुपितवृत्तिर्वीक्ष्य हन्तुं प्रवृत्तः।
रुरुमभिमुखमूचे ब्रूहि को मेऽपराधः
कथमिह गतपापं मां रुरो! हन्तुमुत्कः।। 32।।

रुरुरुरगमवोचन्मे प्रियां चारुशीलाम्
अदशदुरग एकः सा मृता तेन दिव्या।
कथमपि निजहेतोरायुषाऽर्द्धेन लब्ध्वा
कुपितमतिरहं स्यामप्यलं वीक्ष्य सर्पान्।। 33।।

श्रृणु! मुनिवर! रोषं नात्र कार्यं कदापि
भुजगकुलमशेषं मारणे बद्धवैर!।
महिसुरधृतशापा नैव ते नूनं दशन्ति
क्वचिदपि हतिमाप्ताः सर्वथा ते दशन्ति।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



खगममुनिरभून्मे डुण्डुभस्याथ विप्रः
तपसि महति लीनः कृत्रिमव्यालभीतः।
अशपदपि च रुष्टो मामसौ येन पश्य
धृतभुजगशरीरः शापमुक्तोऽधुनाऽहम्।। 35।।

जाने तवाद्य सुकृतेन च वीतशापः
पश्यामि शापशमनाय पुरः प्रियं त्वाम्।
मन्ये रुरुं प्रमतिसूनुमहं भवन्तम्
वन्दे विशोककरणं रुरुडुण्डुभोऽस्मि।। 36।।

शापस्य वृत्तं रुरुतो निशम्य
हिंसां विहायाशु रुरुर्महात्मा।
सर्पान् निहन्तुं न मनश्चकार,
हिंसाविहीनो धृतशान्तवृत्तिः।। 37।।

विमुक्तशापः स मुनिः सहस्रपाद्
तनुं स्वकीयां च बभार भास्वराम्।
व्रतं प्रियं प्राणभृतामहिंसनम्
महीसुरेभ्यः कथयन् दिवं ययौ।। 38।।

याते मुनौ प्रव्यथितो रुरुश्च
पृथ्वीतलेऽचेष्टत मूर्च्छितश्च।
अस्तीकवृत्तं गृहमेत्य सम्यक्
पृष्ट्वा च विज्ञाय मुनिः प्रशान्तः।। 39।।

प्रमद्वराऽसूत रुरोः प्रभावतः
तपस्विनं भार्गववंशनन्दनम्।
सतां गुणैर्भूषित एव जन्मतो
यशोभिरुग्रैःशुनकोऽभिनंदितः।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तस्माद् बभौ मुनिगणाग्रगतस्तपस्वी
श्री शौनको मतिमतां प्रथमो मनस्वी।
प्रश्नोत्तरेण च पुराणततिः प्रवृद्धा
लोके च सूतमुनितो भुवि नैमिषस्य।।41।।

प्रमद्वरायां शुनको महात्मा
बभौ तपश्चानिशमेव तप्त्वा।
तपोधनारण्यहरिर्मनस्वी,
यतो महात्मा भुवि शौनकोऽभूत्।।42।।

भार्गवाणां श्रुतिश्च स्मृतिर्विद्यया
यस्य वीर्यं यशश्चापि देहे स्थिताः।
नैमिषारण्यवासी मुनिष्वग्रणी
शौनको राजते सत्सु बद्धादरः।।43।।

या महर्षेर्भृगोरन्यभार्या बभौ
तत्र दिव्याभिधायामयं नन्दनः।
भार्गवश्चोशना शुक्रनामा मुनिः
शौनकस्तस्य वृत्तं स्मरन् मोदते।।44।।

येऽपि दिव्याभवा नन्दना श्रीभृगो
भूतले द्वादश प्राप्तविद्याः शुभाः।
भार्गवास्ते जनैः कीर्तिता वंदिताः
भाति चाद्यापि तैर्भारतं सर्वथा।।45।।

**।। इति भार्गवेण त्रिपाठिना कृते भार्गवीये महाकाव्ये रुरुचरितं नाम पञ्चमः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# षष्ठः सर्गः

शौनकः सम्यगाश्रुत्य दिव्यां कथां
सूतसंकीर्तितां नैमिषारण्यगः।
श्रद्धया शुक्रचारित्र्यमावर्णितुं
सूतमानम्य च प्रार्थयामास सः।।1।।

ध्यायमानः कथां सूतपौराणिकः
ह्लादपूर्णः शिरोधूननं चाकरोत्।
रोमहर्षान्वितोऽवर्णयत् भक्तितो
दिव्यवृत्तानि शुक्रस्य रम्याण्यलम्।।2।।

'अम्ब' सम्बोधनात्पुत्रभावं गता
दानवा निर्भयाश्चाश्रमस्था बभुः।
चिन्तयन्तश्च रक्षां भयव्याकुलाः
देवतास्ते हरेरन्तिकं चागमन्।।3।।

भार्गवी–तेजसा रक्षिताश्चासुरा
इन्द्र आवेदयद्विष्णुमाद्याद् यथा।
वृत्तमाश्रुत्य चक्रेण सद्यस्तदा
विष्णुराचिच्छिदे भार्गवीकन्धरम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



येऽवशिष्टास्तदा तेऽसुरा भार्गवं
कल्पयन्तः शरण्यं सदा चोशनाम्।
प्राप्य संतोष्य मत्वाऽ भयं सर्वथा
मातृनाशोत्थ शोकाकुलं पिप्रियुः।।5।।

नेमिकृत्तं स्वमातुः शिरो विष्णुना
रक्षसां रक्षितुं प्रोद्यतायास्ततो।
शुक्रदेवोऽपि विज्ञाय खिन्नो बभौ
रक्षसां रक्षणे तत्परोऽभूत्तदा।।6।।

इन्द्र आसीत्त्रिलोकस्य राजा यदा
यक्षनाथः कुबेरोऽसुरेशो बभौ।
योगसिद्धो धनेशं प्रविश्योशना
सन्निरुध्यात्मसात्तत्पदञ्चाकरोत्।।7।।

नैव लेभे हृतस्वो धनेशोऽपि शम्
ख्यापितं तेन वृत्तं शिवायाशु तत्।
योगिना योगशक्त्या यथा निर्धनोऽ
ऽसौ कुबेरः कृतस्तत्प्रणम्यावदत्।।8।।

संचुकोपाशुतोषोऽपि विज्ञाय तं
शूलमुद्यम्य हन्तुं प्रवृत्तोऽभवत्।
भार्गवो ज्ञातवान् तच्चिकीर्षा यदा
शंभुशूलाग्रभागे स्थितोऽभूत्तदा।।9।।

योगमूर्तिं कविं तं त्रिशूलाग्रगं
योगविद्याप्रभावाद् हरो ज्ञातवान्।
नैव शीघ्री करस्थोऽ भवद् चोशना
शंकरः कोपरक्ताननः संबभौ।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तं त्रिशूलाग्रगं वीक्ष्य शंभुस्तदा
शूलमानम्य चापाकृतिं चाकरोत्।
कथ्यतेऽद्यापि लोके पिनाको जनै
र्भार्गवः शंभुहस्तंगतोऽभूत्तदा।। 11।।

पाणिमध्यस्थितं भार्गवं शंकरः
ज्ञातवानास्यमध्येऽक्षिपद् तं रुषा।
शंभुकोष्ठं प्रविश्योशना संभ्रमन्
निर्गमं नाप्तवानाचरत्सत्तपः।। 12।।

स्थाणुमूर्त्या शिवोऽन्तर्जले संस्थितो
ह्यर्बुदाद्बं कठोरं तपश्चाकरोत्।
निर्गतोऽन्तर्ह्रदादाशुतोषस्तदा
वीतरागस्य पूर्णः समाधिर्यदा।। 13।।

वृत्तबोधाय वेधा क्वचिच्छंकरं
प्राप्य चानम्य वृत्तं मुदा पृष्टवान्।
क्षेमयोगौ विगृह्यालयं प्राप्तवान्
संस्मरन् सत्तपः शूलिनोऽयं विधिः।। 14।।

वीतविघ्नं तपः योगसंवर्धितम्
शंकरस्याभवत्सत्फलैरन्वितम्।
भार्गवश्चोशना शंभुकोष्ठे स्थितः
देहसंयोगतस्तत्फलेनान्वितः।। 15।।

सत्तपोभिर्महायोगितामाद्यता
माप्तवान् वीर्यतामेव लोकत्रये।
ज्ञातवान् सत्यधर्मव्रती शंकरः
ध्यानयोगी बभौ चोशना स्वोदरे।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शंभुकोष्ठे निलिल्ये हताशो द्विजो
नाशकच्चात्मनो मोक्षमिष्टं ततः।
उद्विजन् प्रार्थनां भार्गवश्चाकरोद्
ध्यानमग्नः शिवस्योदरे चोशना।। 17।।

तेजसा स्वेन शक्तिं लभेत्कोऽपि चेद्
नैव दोषो भवेद्रुद्ररोषः कथम्।
येऽन्यतोऽधीशतामावहन्त्याशु तान्
संजहारोशना स्वैस्तपोभिर्भृशम्।। 18।।

योगशक्त्या धनेशो वशी चेत्कथं
रोषभावः शिवे नैव जाने शुभम्।
शासकं शंकरं मन्यमानो मुहुः
शान्तिहेतौ स्तुतिं प्रारभत् भार्गवः।। 19।।

इन्दुभागीरथीभूषणं मस्तके
पिंग–केशाटवी मूर्ध्नि संराजते।
नन्दितं नन्दिभृंगीगणैर्नन्दने
पार्वतीशं भजे तं तुषाराद्रिगम्।। 20।।

यस्य ढक्कारवं नर्तने कल्पितं
नाट्यशास्त्रज्ञतां यो दधे पूर्णतः।
यस्य विद्यागुरुत्वं वरीवृत्यते
नौमि नृत्यप्रियं तं नटेशं मुदा।। 21।।

व्यालसंवेष्टितं यज्जटाजूटकं
व्यालयज्ञोपवीतं गले लम्बितम्।
व्यालकौपीनमाच्छादनं यत्प्रियम्,
व्यालमालं कपालान्वितं चिन्तये।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नीलकण्ठत्वमाप्तं च पीत्वा विषं
लोकमांगल्यमावर्द्धितं भूतले।
येन तस्मै नमः शूलिने मुक्तये
देहि मोक्षं स्वकीयोदरादद्य मे।। 23।।

मोक्षदाताऽक्षतैरर्चितो भूतले
विल्वपत्रार्पणेनार्पयत्यक्षतम्।
त्र्यक्षदृष्टिर्दधात्यक्ष मालां सदा
नौमि भक्तप्रियं शंकरं श्रीकरम्।। 24।।

भूतिदानं जनेभ्यः कृतं शंभुना
लिप्यते भस्म देहे विभूतिज्जुषा।
लभ्यतेऽलभ्यमीशानुगैर्भूतले
मादृशश्चोदरस्थोऽपि दुःखानुगः।। 25।।

नैव जानन्ति मुग्धा अबोधान्वितास्
चापलं चेत्पितुः सम्मुखं कुर्वते।
किं पिता मर्षयत्येव दोषान्न तान्
नाथ! संचिन्त्य मां क्षन्तुमर्हस्यलम्।। 26।।

शंभुराश्रुत्य मोक्षाय तां प्रार्थनां
शैलजाब्जानने दृष्टिमिष्टां दधे।
नैव ध्यानं ददौ शंकरस्तत्क्षणात्
शुक्रभूतो बहिर्निर्ययौ चोशना।। 27।।

तेजसा भास्वरं यान्तमुद्वीक्ष्य तं
शूलमुत्थाय हन्तुं शिवः प्रोद्यतः।
वारितोऽभूद् भवान्या कथंचित्प्रभुः
पुत्र भावेन शुक्रः शिवारक्षितः।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तेजसा पूरितो योगिभिर्बन्दितः
पार्वती लालितोऽ भूदवध्यः कृती।
राक्षसैः पूजितो जीवनी विद्यया
सज्जितः शुक्रनामा द्विजो भार्गवः।। 29।।

शुक्रशक्त्योर्जिता दानवाः स्वर्गता
देवताभ्यो ह्यलं नैकवारं बभुः।
जीविताश्चापि संजीवनी विद्यया
भार्गवेणैव वित्रासिता देवताः।। 30।।

भार्गवानुष्ठितं वर्षसाहस्रिकं
पूर्ण धूमव्रतं वीक्ष्य तुष्टः शिवः।
ओजसा बुद्धि–विद्या तपोभिः सदा
भार्गवो निर्जरेभ्योऽप्यलं संबभौ।। 31।

विद्यते यच्छिवे तद्ददौ शर्मणे
वित्तपत्वं प्रजापालकत्वं तथा।
सर्वतोऽवध्यतां प्राप्तवान् भार्गवो
वज्रकायो जरामृत्युहीनो बभौ।। 32।।

बद्रिकारण्यगः शंभुमाराधयत्
दिव्य संजीवनीविद्यया भूषितः।
योगिवंद्योऽखिलैर्दानवैः पूजितो
याजकश्चोशनाऽभूच्छिवोपासकः।। 33।।

संयमी स़द्व्रती क्वापि तप्तुं तपः
स्वाश्रमेऽभूद् व्रतस्थः कविर्भार्गवः।
क्रान्तदर्शी कवित्वे मतिञ्चादधे
भारतीसेवकः सत्कविश्चोशना।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



काव्यमाराधितुं सद्व्रते संस्थितं
प्रेषिता या जयन्ती सुता रागतो।
भार्गवाय प्रियां कन्यकां दत्तवान्
तत्पिता काव्यपत्नी जयन्ती बभौ।। 35 ।।

वीतिहोत्रो नृपः पुष्करद्वीपगो
यस्य चोर्जस्वती सुन्दरी कन्यका।
सा च दत्ता नृपेणोशनार्थं यतः
शुक्रदेवस्य भार्याद्वयं भूतले।। 36 ।।

तस्य भार्या तृतीया प्रिया गोरभूत्
तुर्यपुत्राः प्रसूता यतः शुक्रजाः।
ते च शंडेति मर्का वरुत्रिंस्तथा
त्वष्टदेवोऽभवन् भर्गिवस्यात्मजाः।। 37 ।।

विश्वकर्मा त्रिशीर्षा सुतौ त्वष्टजौ
देवयानी सुतोर्जस्वतीसंभवा।
रंजनो यः पृथूरश्मिकोऽप्यंगिरा
सूनवस्ते वृहद् वै वरुत्रिन्भवाः।। 38 ।।

पाण्डुनामा विधातुः सुतः कीर्तितो
यस्य पुत्रो द्युतिष्मान् संराजते।
तत्सुतावुन्नतस्वानवाताभिधौ
ख्यातिजोऽयं भृगोरन्त्यपुत्रान्वयः।। 39 ।।

धाता बभौ ख्यातिसुतस्तृतीयो
यस्यात्मजोऽ भूच्च मृकंडुदेवः।
मृत्युंजयी चापि पुराणकर्त्ता
जातस्तथाचार्यवरोऽस्य पुत्रः।। 40 ।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन विरचिते भार्गवीये शुक्रचरितानुवर्णनं नाम षष्ठः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सप्तमः सर्गः

मृकण्डुः पुत्रेप्साभरितमनसाऽतप्यदनिशम्
प्रसन्नोऽभूच्छंभुर्वरय वरमूचे मुनिवरम्।
सुतं मे देहीति प्रणिगदति भक्त्या परिददौ
गुणी जातः पुत्रो जगति ननु चाल्पायुरभवत्।।1।।

मृकण्डुः पुण्यात्मा तनयमिममालोक्य मुदितो
द्विजानां संस्कारानकृत विधिवच्चापि मतिमान्।
गृहे काले काले महिसुरकुलस्यापि सरणिः
शिशौ मार्कण्डेयेऽभवदभिरता संस्कृतिरपि।।2।।

तपस्वी स्वाध्यायी शिशुवयसि विद्यार्जनमतिः
पितुर्विद्यामूर्तेरखिलनिगमानङ्गसहितान्।
अधीत्यान्यान्धर्मानपि पठितवान् शास्त्रनिकरान्
बभौ दीपाद्दीपः प्रकटित इवायं मुनिवटुः।।3।।

जटाजूटं विभ्रच्छिरसि तपसा दीप्तवदनं
विशालं यद्भालं तिलकखचितं कान्तिभरितम्।
मुखे दिव्या वाणी निगमविदिता चाष्टविकृता
मुनिर्मार्कण्डेयो जयतु वटुमूर्तिः पटुमतिः।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दधानं त्वग्वस्त्रं परिलषति कृष्णाजिनमपि
व्रती दण्डं दिव्यं नवलमुपवीतं परिदधन्।
अलाबूमादत्तेऽनिशमधृत मौञजीं कटितटे
मुनिर्मार्कण्डेयः प्रथमवयसि प्राप वटुताम्।।5।।

उपास्ते संध्यासु द्विजगुरुरवीनग्निसहितान्
विधत्ते यो दर्भान्नियमयति वाचं निशिदिनम्।
सकृद् भोक्ता भैक्ष्यं गुरुवचनतो वा न बुभुजे
सु–मालां संधत्ते नियमसहितश्चाक्षजनिताम्।।6।।

तपः स्वाध्यायाभ्यां परिचरनलं चायुतसमा
व्यतीयुर्ध्यायन्तं हरिमनिशमाराधनपरः।
जिगायायं मृत्युं भवभयकरं योगिविनुतो
मुनिर्मार्कण्डेयोऽभवदपि च मृत्युञ्जय इति।।7।।

न योगैरध्यात्मैर्नहि जगति सिद्धयादिभिरपि
न भक्त्या न ज्ञानैर्नहि च हठयोगादिभिरयम्।
न मन्त्रैस्तन्त्रैर्वा न च विभवदानादिभिरलम्
विजेयः स्यान्मृत्युर्जयतु यमवृत्योज्झितमुनिः।।8।।

भृगुर्ब्रह्मा शंभुः सुरमुनिनरा दक्षसहिताः
समायाता द्रष्टुं मृतिजयकरं तत्र पितरः।
तपोनिष्ठाः सिद्धा हरिमनुरता विस्मययुता
मुनिं मार्कण्डेयं स्तुतिभिरखिलाशीर्भिरमृडन्।।9।।

तपः स्वाध्यायाभ्यामछषत यमाद्यैरनुदिनं
ह्यविद्यां तज्जातामखिलगुणदोषानपि कृती।।
विशुद्धः शुद्धान्तःकरणनिचयैः सत्वजनितै
र्हरावात्मानन्दे परमरमणे चैष युयुजे।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



महायोगेनात्मानममिलदयं योगिविनुतो
महान् कालो यातस्तपसि निरतस्यास्य विपिनम्।
सुरेशो विज्ञायावहदपि च भीतिं मुनिकृताम्
प्रयाताः षड् लोके तपति सति मन्वन्तरसमाः।। 11।।

उदीच्यां भद्राख्या वहति तटिनी पुष्पसहिता
शिला चित्रा दिव्या नगपतितटेऽस्याश्रमवरः।
लताभिर्वृक्षौघैर्विहगकुलनादैः शुचिजलैः
सदाकीर्णः पुण्यं तपसि निरतो यत्र भृगुजः।। 12।।

सगन्धर्वः कामो मधु मलयवाही च पवनस्
तपोविघ्नं कर्तुं सुरयुवतयो वक्रनयनाः।
सुरेन्द्राज्ञापूर्त्यै मदनपृतनाः सम्यगुदिता
मुनिं मार्कण्डेयं तपसि निरतं चञ्चलयितुम्।।13।।

क्वचिन्मत्ता भृङ्गाः कुसुमरसमाघ्राय रणिताः
क्वचिद् गीती रम्या परभृतकृता पञ्चमयुता।
नरीनृत्यन्ते प्रावृषि गतवति क्वापि शिखिनो
मदोन्मत्ता दद्रुःकलरवयुताः पक्षिनिवहाः।। 14।।

रविः श्रान्तो रक्तो भुवनचरणादस्तशिखरं
समारूढः शान्तो मुनिजनकृतार्ध्य परिवहन्।
शनैः श्रावं श्रावं सवितुरथ मंत्रान् मुनिवने
बभौ सह्यांशुः स्वं गमयति च कालं निशि सदा।। 15।।

लताः पुष्पाढ्याश्च भ्रमरगणजुष्टाः सुरभिताः
द्रुमा नम्रा मूर्ध्ना फलभरितशाखाः प्रमुदिताः।।
सदा तृप्ता वन्या हरिणखगयूथाश्च पशवः
मृकण्डोः पुत्रस्याश्रमवनमिदं शान्तिनिलयम्।।16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तपोभिः स्वाध्यायैर्हवनकरणैः पुण्यविपिनं
प्रविष्टो देवेन्द्रेरितमतिरभूत्पूतपवनः।
समादायाङ्के स्वे हिमकणयुतं निर्झरजलम्
परिष्वज्यानेकान् कुसुमनिकरानाश्रमगतान्।।17।।

ववौ मन्दं मन्दं मधुरपवनो गन्धमदिरः
जगौ स्मारं स्मारं स्मरणसुखदः कामकमनो।
निशावक्त्रश्चन्द्रः प्रमुदितकरैराप्तविपिनो
वसन्तः सन्नद्धः कुसुमशरसाचिव्यकरणे।। 18।।

द्रुमाणां शाखाश्च व्रततिततिभिश्चाभिरमिताः
प्रवालैः प्रोद्भूतैरभिनव सुगुच्छैः पुलकिताः।
सगन्धर्वः गीतैरभिमतयशो वाद्यसहितैः
स्मरस्तत्रायातः सुरयुवतियूथैरनुगतः।। 19।।

सुरस्त्रीणां नेता धनुषि शरमाधाय मदनो
विलासक्रीडायामृतुपतिकृतायां वनभुवि।
रणद्भृङ्गैरुद्यत्परभृतरवैरञ्चितवने
मुनिं मार्कण्डेयं गतनियममाकर्तुमुदितः।। 20।।

स्मरावेशाद् सर्वा मदनमतिकाश्चाश्रमगताः
प्रजा मत्ता भृंगा मुखरितखगास्ता द्रुमलताः।
विपञ्चीरावैस्ता विबुधललनाः नृत्यवलिताः
मुनिं मोहाविष्टं तपसि विदधातुं खलु रताः।। 21।।

हरिं ध्यायन्तं तं नयनयुगलोन्मीलितमुनिं
समाप्ताग्नेर्होत्रं हुतवहमिवान्यं स्मितमुखम्।
परीतं तेजोभिर्व्यपगतमदं वीक्ष्य सभया
दुराधर्षं मत्वा परिभवमशोचन् मदकराः।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुनौ ध्यानापन्ने सुरयुवतिनृत्यं पुनरभूत्
मनोहारी वाद्यध्वनिरपि मृदङ्गानकभवः।
क्वचिद्वीणावाद्यं पणवपटहध्वानमभवत्
जगुर्ध्याने विघ्नं तपसि विदधातुं स्मरजनाः।। 23।।

प्रहारः सन्ध्यायां मदनशरजातः समभवत्
वसन्तो विघ्नार्थं मुनिजपतपःस्वास्तृतमतिः।।
प्रखेलन्ती बाला स्तनभरनता कन्दुककरा
मुनेरग्रे व्यस्ता चपलजघना कामललना।। 24।।

चलद्दृष्टेस्तस्यास्त्रुटितकचभूषास्रजमभूत्
कटाक्षैरीक्षन्ती ललितवदना सूक्ष्मवसना।
मुनेरग्रे वायुर्हरति वसनं बन्धरहितम्
यदा जातौ काले गतपटकुचौ तत्र सघनौ।। 25।।

न मारस्तत्क्रीडा न च युवतिजांगप्रकटनम्
न दृष्टिस्तिर्यञ्चा न च विषमबाणस्य सु–शराः।
प्रभौ भक्तौ लीने सुरपतिकृतं नैव सफलम्
तपस्वी युञ्जानो मदनविजयी न प्रचलितः।।26।।

अनीशस्योद्योगं विवदनरतानां शममहो
सुधाप्राप्तिं नित्यं दुरितजनवृत्या स्थितिभृताम्।
सतां मोहं कामं हरिजनहृदि प्रावृटि रविम्
यथा प्राप्तुं तद्वद् सुरपतिकृतं तन्मुनिकृते।। 27।।

बभौ मोघश्चन्द्रः परिकरयुतश्चापि मदनः
हृतश्रीको जातश्चकितनयनोऽभूत्सुरगणः।
हरिस्त्राता योऽ भून्निजजनकृते भक्तिकरणाद्
न सीमानं स्प्रष्टुं प्रभवति जनः कोऽपि भजताम्।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुरेशं कामं तं सुरविभवमप्यागतमहो
न पश्यन् संसारं हरिपदरतिं चाथ कुरुते।
मुकुन्दो भक्तार्थी प्रकटिततनुस्तस्य पुरतो
बभौ मार्कण्डेयः स्तिमित इव चालोक्य नृहरी।। 29।।

नरश्चाविर्भूतः कमलनयनः श्रीहरियुतश्
चतुर्बाहू दण्डं सरलमिह गौरोऽमितकलः।
पवित्रं पाणौ स्यान्नवकमलमालाञ्चितगलो
दधानस्त्वग्वस्त्रम् रुरुमृगभवञ्चापि ललितम्।। 30।।

कृपामूर्ती जातौ कनकमखसूत्रेण सहितौ
तडिद्वर्णौ पीतौ विबुधगणवन्द्यौ श्रुतिधरौ।
अलाबूं बिभ्राणौ तपसि निरतौ प्रांशुवदनौ
मुनिं र्दृष्ट्वेवेत्थं प्रमुदितमनः सन्नतिपरः।। 31।।

न वक्तुं नो द्रष्टुं प्रभवति मुनिर्गद्गदतया,
कथंचिच्चोत्थाय प्रणिगदति चोच्चैर्नम इति।
नरस्यार्चां चक्रे सुमतिरथ नारायणहरेः
सुमाल्यैर्धूपाद्यैः स्तुतिविधिरतोऽभूद् भृगुसुतः।। 32।।

नरं दिव्यं नारायणमुनिमवेक्ष्याशु पदयो
र्ननामाविर्भूतं मुनियुगलमायातमभितः।
उदञ्चद्रोमाश्रुः प्रभुमपि विलोक्य प्रमुदितः
करौ बद्ध्वा नम्रः परिलुठति भूमौ नतिपरः।। 33।।

नतिर्दण्डाकारा श्रुतिमयवचोभिः स्तुतिविधा
वपू रोमाञ्चालिं पुलकमिषमाधाय निभृतम्।
प्रहर्षोद्रेकोत्थं नयन युगलं चाश्रुभरितम्
मुनेः पश्यन् भक्तिं प्रभुरपि बभौ भक्तमतिकः।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यमासेव्यं ध्यातुं विधि–हर–मुनीशाः स्तुतिरताः
यमाजप्यं गातुं व्यवसित–पुराणाः सनिगमाः।
यमालोक्यं भक्त्या सुरनरभवा योगनिरताः
स एवायं स्वामी मम मनसि वासी भवतु भो!।। 35।।

अगम्योऽवर्ण्यस्त्वं मति–कृति–सपर्याभिरकलो
तथाप्याराध्यं त्वां नृप–मुनि सुराः सेवनपराः।
नमन्तो ध्यायन्तश्चरणकमलास्वादमधुपाः
भवन्त्यद्धा वन्दे भव–विभवपारं प्रभुवरम्।। 36।।

न वेदैर्नाध्यात्मानुगतमखपुण्यैरनुदिनं
न विज्ञानैर्ज्ञानैर्विरतिरतिहीनैरपि जनैः।
तपोभिश्चात्युग्रैरतनुतनुकष्टैर्बहुधनैः
न लभ्यस्त्वं साक्षान्मखविधुतपापैरव जनम्।। 37।।

मखानां विद्यानां निगमनिरतानां कृतधियाम्
जपानां दानानां वनमधिगतानाञ्च तपसाम्।
मुनीनां सिद्धानां नियमचरणाद् योगकरणाद्
फलं यत् तत्प्राप्तं चरणयुगलं ते भवहरम्।। 38।।

न माता मे त्राता भवभयहरो नास्ति जनकः
न पाता मे धाता कनकमणिसारो न शरणम्।
सखा बन्धुर्बन्धो न हि मम कृते संसृतिरतिः
प्रभो ! त्वं मे सर्वं चरणशरणं देह्यनुदिनम्।। 39।।

मदो मोहो मानो मम मनसि दोषाय निरताः
क्वचिद् कामः क्रोधः करणनिचयैः कर्षणपरौ।
ललल्लोभालोलस्तव सुरतिकार्ये गतिहरः
प्रभो ! त्वं मे सर्वं चरणशरणं देहि सततम्।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न जाने ते भक्तिं नहि बुधजनानां गतिमती
न संगो भक्तानां नहि च तव सेवारतिरहो।
न यन्त्रं मन्त्रं नो कथमपि तथापि स्मृतिरतिः
त्वदीयोऽहं वृत्या चरणगतिमाप्त्यै त्वयि रतः।।41।।

प्रभावान्मायाया मुमुहुरिह सिद्धाश्च कवचः
न वेत्तुं माहात्म्यं ह्यभवनखिलाः साधनविधाः।
समर्थास्ते स्वामिन् नयनविषयस्त्वं विधिवशाद्
यदद्यैवं जातो मम शरणमाप्त्यै तव कृपा।।42।।

भृगूणां पितृणां सुकृतफलभोगाय तपसाम्
कृतं पुण्यं पूर्वं यदपि फलतामेति सकलम्।
शुभं भाग्यं सर्वं समुदित फलञ्चाति महताम्
भवघ्नी पापघ्नी मधुरनवकान्तिश्च पुरतः।।43।।

जले भूम्यां मार्गे नभसि भवने तादृशि वने
नरे भृंगे कीटे निशिचरतनौ वानरकुले।
विहिंस्रे हिंस्रे वा जलचरभवे वा पशुकुले
जड़े चैतन्ये वा भवति भगवत्ता तव कृता।।44।।

कदा वत्स! प्रेष्ठ! प्रिहितहितवाचाऽमृतगिरा
ममाह्वानं कुर्वन् मदनमदहारी खलु हरिः।
लुठन्तं पादाब्जे शरणमभयं दित्सुरपि माम्
मुदा प्रीतिं वर्षन् प्रभुरिह भवेदक्षिविषयः।।45।।

प्रभो ! शम्भो ! विष्णो ! कमलनयन ! ब्रध्न ! सुगते !
रघूत्तंस ! ब्रह्मन् ! यदुकुलपते ! हे नरपते ! ।।
हरे! हेरम्ब ! श्री रघुकुलमणे ! राक्षसरिपो !
प्रसीद ! त्वं नामस्मरणफलदोऽभूर्मम कृते।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मृकण्डोः पुण्यानां फलमिव च पूर्वार्जिततपः
धृता मूर्तिर्मन्ये भुवि समुदिता सर्व विदिता।
मुनिर्मार्कण्डेयः प्रणमति हरिं स्तोत्रवचनैः
हृदा भक्त्या प्रीतः प्रणतमुनिमूचेऽखिलपतिः।। 47 ।।

प्रभोः स्नेहोद्गारैर्भरितहृदयं भावशबलं
लुठन्तं पादान्ते स्तुतिभिरपि चार्चन्तमनिशम्।
भुवश्चोत्थायांके वरय वरमाहार्तिशमनः
स्पृशन् जिघ्रन् प्रीत्या प्रभुरपि तदा तन्मुनिशिरः।।48 ।।

प्रभो! पाह्याशाभिर्निगडितजनं मामशरणम्
भवत्रासैस्त्रस्तं जननमरणाभ्यामव सदा।
कृपावृष्ट्या पारं नय विनयमाधेहि तरणे
कृपासिन्धो ! सिन्धोर्वरमिह न जाने गमय माम्।। 49 ।।

हरिर्हारी रागान्निजजनकृताघान्यपि यथा
जनेः साफल्यं स्यादखिलसुकृतानां फलमिव।
दृशोर्मार्गे याते कमलनयने किं न लभते ?
वरं याचे नास्माच्छरणमथ याचे च पदयोः।। 50 ।।

पिता प्रीतः पुत्राचरितसुकृतेभ्योऽखिलगतीः
पतिः पत्न्यै यच्छत्यखिलशुभताञ्चापि मुदितः।
तथा दिव्यां कीर्तिं विविधबुधतां चाप्यमरतां
ददावाचार्यत्वं हरिरथ पुराणस्य मुनये।। 51 ।।

वरं दत्वा विष्णुर्निजभुवनमाप्तः सगरुडो
मुनिं स्मारं स्मारं जलधितनयायायकथयत्।
जगन्मोक्षार्थं यं स्मरति स हरिर्यं स्मरति सः
सदा मार्कण्डेयो जयतु मुनिवृन्दैरपि नुतः।। 52 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पितुर्ज्ञात्वाऽल्पायुः शिवचरणसेवाव्रतधरो
जपन् मंत्रं मृत्योर्विजयमभिकांक्षन् निशिदिनम्।
महाकालः कालं कवलयति पादानतजनं
ररक्षायुस्तस्माद् हर! हर! महादेव! शरणम्।। 53।।

शिवार्चायां लग्ने सति यम उपेतः खलु मुनौ
जपन् चोच्चैर्मन्त्रान् मुनिरपि शिवं स्वे हृदि दधे।
यदा पाशैर्बन्धं मृतिमपि यमो दातुमुदितः
त्रिशूली तं हन्तुं सपदि रभसा प्राप च मुनिम्।। 54।।

न हन्तव्यो भक्तः शिवचरणलीनो जपरतः
यमस्त्वं नो स्वामी भवसि मम सेवार्पितधियाम्।
सदाऽहं त्राता स्याम् पर कृतभयेभ्यो भुवि सताम्,
भयं मृत्योर्न स्यात् 'हर हर महादेव' जपताम्।। 55।।

त्रिशूलिन् ! हे शम्भो ! त्रिपुरहर ! तापत्रयरिपो!
पिनाकिन् !कामारे !त्रिनयन !शिवानायक ! प्रभो!
गजाराते ! दातः शिव! शिवकर! प्रेष्ठ ! भयहृत्
विभो! मृत्योर्मां पाह्यव शिव ! महादेव ! शरणम्।। 56।।

कपालिन्! भूतेश ! प्रमथगणनाथ ! व्रतगते !
चिताभस्मोद्धूलिन् ! गलभुजगमालिन्! शशिशिरः।
वृषारूढ! स्वामिन्! डमरुकरधारिन्! पशुपते!,
मृतेर्मां पाह्येवं हर! हर! महादेव! शरणम्।। 57।।

शिवं जप्त्वा ध्यात्वा शिवचरण सेवारतितया
मुनिर्मार्कण्डेयो जयति च मृतिं वीतमरणः।।
महाकालः कालं विकलयति भक्त्या च तपसा
चिरंजीवी जातो मुनिरथ शिवस्यार्चनरतः।। 58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रजेशस्याल्पायुर्भवति यदि दीर्घायुरनिशम्
मुनीनामाशीर्भिः क्षयितयमपाशार्थितगतिः।
महामृत्युं जित्वाऽमृतमवति मृत्युञ्जयमतिः
जना मार्कण्डेयं दधति च जयन्त्यद्य मरणम्।।59।।

चिरं स्याच्चेदिच्छा विगतमरणाद् जीवितुमथो
जपन् ध्यायन् नित्यं त्रिनयनधरं चेन्दुशिखरम्।
यथा मार्कण्डेयोऽभवदमृतमूर्तिः शिवमतिः
तथा भक्त्या कुर्युर्हरभजनमत्रापि मनुजाः।।60।।

प्रभोर्मायां द्रष्टुं मुनिमनसि भावं समभवद्
तदा कल्पापाये लयपयसि लीनो मुनिरभूत्।
ददर्शायं बालं ललितवटपत्रासनगतम्
शयानं तं नत्वा स्तवनमकरोच्चादिजनुषः।।61।।

क्वचिच्छ्वासावेगं ह्यनुसरति चान्तर्मुनिरगात्
अपश्यद् ब्रह्माण्डं विविधविधिविष्णुत्रिनयनान्।
विभूतीः सर्वास्ताश्चकितनयनेनाऽथ मुनिना
भृशं दृष्टा भीत्या नयनपुटमावृत्य समवेत्।।62।।

प्रभोरुच्छ्वासाभ्यां सह बहिरभूद् वीक्ष्य निखिलाम्
अदम्यां तां मायां मुनिरयमभूत्स्वाश्रमभुवि।
मुहुःस्मारं स्मारं हरिकृतदशां चिन्तितमतिः
गतो भक्त्या सद्यः प्रभुशरणमेवं भृगुभवः।।63।।

इत्थं तपोभिरमृतत्वमवाप्य मायां,
तीर्त्वाऽपि बोधमहितश्च मृकंडुसूनुः।
पौराणिकश्च विदितोऽपि बहुश्रुतोऽभूद्,
त्रैकालिको जयति यच्चिरजीविवन्द्यः।।64।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मूर्धन्यया मुनिषु मूर्धनि मोदमानः,
मात्रा बभौ भुवि मृकण्डुसुतेन विद्वान्।
वेदश्रियैव खलु वेदशिरा महात्मा,
दक्षक्रतावकृत येन मखस्य कार्यम्।। 65 ।।

शीर्षस्थितः सकल वेद विदां वरिष्ठः
जग्राह पाणिमथ वेदशिरा तपस्वी।
यस्या विभाति भुवि सैव च पीवरीति
ख्याताऽनयोरपि कथाऽस्ति पुराणकेषु।। 66 ।।

एको मुनिः समभवच्च पुराणकर्त्ता
चैको मुनिः समजयच्च मृतिं स्वकीयाम्।
एको मुनिश्च ददृशे हरिजां सुमायाम्
एको मुनिर्विजयतेऽत्र मृकण्डुसूनुः।। 67 ।।

यस्यास्थिभिर्भुवनभारविनाशनाय
चापत्रयं जगति कीर्तिततिं तनोति।
गाण्डीवशाङ्‍र्गधनुषीह पिनाकनामा
ख्यातश्च खेऽपि जयतीह दधीचकीर्तिः।। 68 ।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन विरचिते भार्गवीये मार्कण्डेयानुचरितम् नाम सप्तमः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अष्टमः सर्गः

भृगोः कुले भूरि तपोभिरिद्धो
दधे दधीचिश्च्यवनात्स्वदेहम्।
बभूव बाल्यात् तपसि प्रलीन
स्तुतोष भक्त्या च शिवं समन्तात्।।1।।

श्रितावतारश्च शिवः शिवाय
प्रसन्नताराधिपदीप्तदेहः।
तपोरतं तं समुवाच तुष्टो
वराय दिव्याय मुदा दधीचिम्।।2।।

भयंकरं तं हि भयंकराणां
लयं करं तं प्रलये पुरारिम्।
विलोक्य देवं स्वपुरः स्थितं तं
ननन्द भृग्वन्वयसंभवोऽयम्।।3।।

उवाच दीनत्वमहं न यायाम्
कदापि वध्यो न भवेयमत्र।
ममास्थिषु स्यात्कुलिशत्वमिष्टं
शिवो ददौ तन्मुनयेऽथ सर्वम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विशालकायं दधदंघ्रिदण्डम्
भुजद्वयं पीवरमंशुरुच्चैः।
दधानमद्रेर्गुरुतां शरीरे
दधीचिराभाति च तेजसैव।।5।।

धृतं शरीरेण सृतेश्च सारम्
कृतं वशेऽशेषसुरैरुपास्यम्।
हृतञ्च संसारबलं वपुष्मान्
जिताश्च तेनामरलोकपालाः।।6।।

विलोक्य दीप्तोन्नतमस्य भालम्
दृढाङ्गिनं तुङ्गतनुं युवानम्।
सुराधिपोऽ प्युद्विजते प्रभावाद्
स्ववर्चसाऽऽभाति दधीचिदेवः।।7।।

क्वचिद्दधीचेस्तपसः प्रसन्नः
सुराधिपस्तं वरयाचनार्थम्।
न्यवेदयत्सोऽपि परां हि विद्या
मयाचतेष्टां मधुविद्ययोक्ताम्।।8।।

ददौ सुरेशो मुनये विशिष्टाम्
तदा च तां ब्रह्मयुतां हि विद्याम्।
न्यषेधि दातुं गुरुणा परेभ्यः
प्रदानतः स्यात् स्वशिरो विनाशः।।9।।

पितुर्जरायाश्च विमोक्तुकामो
ह्ययाचतामश्वियुगौ सु–विद्याम्।
मुनिं दधीचिं स परोपकारी
शिरोविनाशं प्रति नाभ्यशोचत्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दधीचयेऽश्वाननमेव दत्तम्
तदाश्वियुग्मेन मुनेः शिरश्च।
क्वचिद्धि गुप्तं मुनिराह विद्याम्
हयाननः सन् निखिलां परार्थम्।। 11।।

प्रभोः स्वरूपं भुवि बोधमस्ति
ददाति सम्प्राप्य न यः परेभ्यः।
प्रसन्नतां याति हरिर्न तस्मै
विचार्य विद्यां प्रददौ दधीचिः।। 12।।

गुरोर्निषेधादपि दिव्यविद्यां
दधीचिदेवोऽन्यजनाय सद्यः।
ददौ च विज्ञाय सुराधिनाथः
चकर्त मूर्धानमलं हयस्य।। 13।।

पुरैव गुप्तञ्च शिरो दधीचे
र्भिषग्वराभ्यां समयोजि येन।।
द्युभावलंचक्रतुराप्तविद्यौ
मुनिश्च सुप्त्वोत्थित एव रेजे।। 14।।

शिवस्य भक्त्योर्जित तेजसाऽयं
मुनिर्न जेयोऽभवदन्यदेवैः।
पराजितश्चक्रधरोऽपि शंभो
र्भक्तो द्विजश्चेज्जयतीह सर्वान्।। 15।।

क्वचित्सुराः शत्रुगणान् विजित्य
दधीचिदेवं समुपेत्य नम्राः।
निजायुधान्याश्रम पादपेषु
गताश्च संस्थाप्य दिवं विशोकाः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिनानि जातानि बहूनि मत्वा
निरर्थकास्त्राणि मुनिर्विचार्य।
पपौ च शस्त्रास्त्रभराणि सद्यः
जलेन सार्धं खलु चूर्णितानि।। 17।।

न केवलं शंभुवरप्रसादाद्
सुरायुधानामपि पानतश्च।
मुनेरथास्थीनि दृढानि सम्यक्
वभूवुरेवं कुलिशानि चाशु।। 18।।

कदाचिदुत्फुल्लविलोलनेत्रः
शचीपतिर्वृत्रकृतां च पीडाम्।
न सह्यमानः ससुरः ससेनः
विचिन्तयामास च तद्विनाशम्।। 19।।

सुरौघहन्ताऽसुरयूथमुख्यः
महासुरो वृत्र इति प्रसिद्धः।
सकालकेयाभिमुखश्चचछाद
शचीपतेर्वासमथारुरोध।। 20।।

महारणे देवपतिस्तदानीम्
पराजितः पीडितगात्र एव।
पितामहं प्राप सुरैरुपेतः
निहन्तुकामो दितिजान् विषण्णः।। 21।।

न्यवेदयच्चाखिलदैत्यभीतिम्
पितामहायाथ ननाम मूर्ध्ना।
पितामहोऽप्याह कृताञ्जलिस्तं
विलोक्य दैत्यध्नमुपायमिष्टम्।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जयाय चेच्छाऽस्ति सुरेन्द्र ! चेत्ते
प्रयाहि शीघ्रं च मुनिं दधीचिम्।
उदारवृत्तेश्च मुनेः कृपायाः
लभस्व चास्थीनि ततः सुकीर्तिम्।। 23।।

तदस्थिसंजातधृताशनिस्त्वं
सुरारिमुत्सादयितुं सुरेन्द्र!।
समर्थतां यास्यसि येन यूयम्
मुदान्विताश्चापि भविष्यथेति।। 24।।

निशम्य शत्रोर्वधमूलकं तं
चिकीर्षुरुद्योगमसौ सुरेशः।
समाययावाश्रममश्रमेण
सुरैर्युतस्तस्य मुनेर्दधीचेः।। 25।।

सुरा दधीच्याश्रममाययुस्ते
समेत्य नारायणमादिदेवम्।
नदीं वहन्तीं ददृशुः समीपम्
सरस्वतीं ज्ञानसरोवरेण।। 26।।

द्रुमैर्लताभिर्मधुपानुगुंजै
र्विघुष्टमाभात्यनुसामगानम्।
पिकस्वराणां कलनादगीतं
तनोति मन्ये विपिने चकास्ति।। 27।।

वराहयूथाः सृमराश्चमर्यः
चरन्ति सम्यक् महिषाश्च गावः।
न केऽपि शार्दूलभयं स्मरन्ति
तपः प्रभावाच्च वने दधीचेः।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



करेणुभिः क्रीडनतत्परैश्च
प्रभिन्न हेरम्वमुखैर्गजैश्च।
निनादितोऽभूत्ससरो निवासः
मुनेर्दधीचेश्च तदाश्रमोऽपि।। 29 ।।

गुहाशयैः सिंहवृकानुनादैः
प्रकूजितं चित्रखगैर्वनान्तम्।
रवैश्च वेदाभ्यसनाद् वटूनाम्
चकास्ति दिव्याश्रमभूःसमन्तात्।। 30 ।।

हुतो हुताशोऽपि समागतानां
ज्वलद्भिरूर्ध्वज्वलनो मुनीनाम्।
करोति यत्स्वागतमिष्टकामं
विधातुमिच्छाव्रतिनां पुरस्तात्।। 31 ।।

स्वरैरुदात्तादिपुरस्कृतैस्ते
पठन्ति वेदान् वटवः षडंगान्।
मुनिव्रताचारविचारपूर्णा
वहन्ति कले श्रुतितां सदैव।। 32 ।।

क्वचिज्जटाभ्यासरताश्च शिष्या
ऋचां प्रगानं विदधत्यजस्रम्।
समभ्यसन्त्येव च सामगानम्
क्वचिच्च शास्त्राणि मिथो वदन्ति।। 33 ।।

प्रकाशयन् ब्रह्मयुतां सुविद्या
मशेषशास्त्रावगमप्रकाशः।
ददाति शिष्येभ्य उदीर्णबोधः
दधीचिरन्तेवसतां पितेव।। 34 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विहाय भोगान् रमते समाधौ
तपोभिराकीर्णमतिर्दधीचिः।
अशेषभोगायतने निवासे
मुदा मुनिर्लीनतपो विरक्तः।। 35।।

हुताशनं चाहुतिभिः प्रसाद्य
स्मरन् परात्मानमनाद्यनन्तम्।
करोति यावच्च सतां प्रसंगः
समाययुस्तावदशेषदेवाः।। 36।।

तपस्विनां शास्त्रविचारगोष्ठी
यदाऽरभत् विघ्न इवाद्वितीयः।
तदाऽऽविरासीत्सगणोऽथ शक्रः
पुरो दधीचेरभि तत्सभायाम्।। 37।।

विधित्सया लोकहितं समग्रम्
हितार्थिनो लोकमुपास्य तुष्टाः।
हितं सुराणामपि लोकशान्त्यै
समीहितः स्यान्मुनिभिश्च सर्वैः।। 38।।

सदा सदाचारमतिर्दधीचिः
दधाति राष्ट्राभ्युदयं समन्तात्।
समागतेभ्योऽपि च शिष्यकेभ्यः
सदादिशत्येव शुभाय विद्याः।। 39।।

दधन् ज्वलन्तीं तपसाऽऽहितार्चिः
दिवाकरद्योतितदेहकान्तिः।
सुराः प्रभां वीक्ष्य मुनिं दधीचिं
प्रणेमुरुत्सन्नभयोऽथ शक्रः।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दधीचिपादावभिवन्द्य देवाः
पितामह–प्रेरितबुद्धयस्ते।
वरं वरेण्यं परियाचमानाः
प्रतस्थुरग्रे शरणागताश्च।।41।।

प्रभो! न यावद् दिवि वृत्रनाशो
भविष्यति प्राप्स्यति देवलोकः।
न शान्तिमिष्टां किल तावदत्र
शमं न यास्यत्यथ जीवलोकः।।42।।

ससेन आक्रम्य दिवं स वृत्रः
निहन्ति देवान् विचिनोति लोके।
प्रपीडितास्त्राणमवाप्तुमुग्राद्
भयाच्च ते न स्थिरतां व्रजन्ति।।43।।

मुषाण रत्नानि जहार रामाः
बभंज खेलोपवनानि वृत्रः।
तताड़ देवान् विननाश वासान्
रुषाऽसुरेन्द्रो विभयांचकार।।44।।

न का निशि स्वप्नगतं च वृत्रं
ददर्श देवानथ ताडयन्तम्।
सुरांगणा वा शिशुरस्तु गेहे
रुरोद भीत्या न जहास चापि।।45।।

बभूव निर्मक्षिक एव सद्यः
द्युलोक इन्द्रस्य पराजितस्य।
मृताश्च सत्पुण्यभृतोऽपि भोक्तुं
न देवलोकं प्रति यान्तुमुत्काः।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वृथाऽस्ति मे भूरि सुराधिपत्यम्
भिया च नाहं वसितुं समीहे।
पितामहाज्ञां परिलभ्य देव
तवाद्य पादौ प्रणमामि पाहि।। 47 ।।

सुराधिपं पाहि च मां विनीतं
दिवं तथा देवगणाधिवासम्।
क्रियाश्च सर्वा धरणीं द्विजांश्च
प्रपाहि हे भार्गव! सर्वलोकान्।। 48 ।।

रणे न जेतुं प्रभवन्ति देवा
दितेः सुतं वृत्रमरातिमूलम्।
विना भवन्तं तपसा विभान्तं
सुराः सुरत्वं न च वोढुमिष्टाः।। 49 ।।

हिताय लोकस्य तथा सुराणाम्
वधाय वृत्रस्य च दानवानाम्।
विनाऽस्थिसंपत्तिमिमां मुने! ते
क्षमा वयं नो न शतक्रतुश्च।। 50 ।।

निशम्य वाचस्तु सुरोत्तमानां
विचार्य तानाह मुदा दधीचिः।
हिताय लोकस्य परार्थमद्य
शरीरमुत्स्रष्टुमहं समर्थः।। 51 ।।

वशी वदान्यो वदतां वरिष्ठः
कृती मुनिर्ब्रह्मविदां वरेण्यः।
दधेऽखिलं ब्रह्मणि लीनवृत्तिः
जहावसून् लोकहिताय विप्रः।। 52 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्वचित् स्वदत्तामपि चात्मविद्यां
ददौ परेभ्यश्च विलोक्य शक्रः।
चकर्त्त मूर्धानमलं दधीचेः
बभूव भोगाय स याचकोऽद्य।। 53।।

ममार यस्तं मुनिमेव सद्यः
स एव चास्थीनि मुनेर्भयेन।
स्वभोगबुद्धया ननु याचतेऽद्य
कथं सुराः सन्ति नरैरुपास्याः।। 54।।

शरीरजास्थीन्यहमद्य दत्वा
भवामि धन्यः खलु गौरवेण।
ममाद्य राष्ट्राय हुतं शरीरं
स्वराष्ट्रसेवाव्रततोऽधिकम् किम्।। 55।।

स्वदेशसेवार्थमिदं शरीरं
गृहं च वस्तूनि यदा जनानाम्।
भवन्ति राष्ट्रस्य समृद्धिरिष्टा
तदा भविष्यत्यभिवर्द्धमाना।। 56।।

मुनेस्तदास्थीनि समाहृतानि
सुरैर्विजेतुं दिवि वृत्रमुग्रम्।
सुराधिपस्त्वष्टुरथैत्य गेहं
न्यवेदयद्वज्रभवास्त्रहेतोः।। 57।।

नतेन तेनामरवंदितेन
प्रदत्तमस्थि प्रविगृह्य शिल्पी।
विनिर्ममे वज्रमभेद्यमस्त्रं
ददौ बभौ येन च वज्रपाणिः।। 58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



उवाच तं देवपतिं प्रसन्नः
स विश्वकर्माऽशनिमर्पयित्वा।
जहीन्द्र! वज्रेण रिपुञ्च वृत्रं
शचीपते! त्वं भव वज्रबाहुः।। 59।।

पुरन्दरः प्रीतमना प्रगृह्य
पुरञ्जयं वृत्रमजेयमुग्रम्।
जघान वज्रेण दधीचिजेन
सुरैः स्तुतोऽभूद्हतकण्टकारिः।। 60।।

इत्थं भृगोः कुलमणेः परमप्रदानाद्
प्राणात्ययादखिलदेवकुलाभिरक्षा।
जाता मुनिश्च यशसा समलंकृतोऽपि
लोकत्रयं जयति कीर्तिवपुर्दधीचिः।। 61।।

यस्योग्रसिद्धिविनुतामिह चास्थिमालां
सम्प्रार्थ्य शत्रुरहिताः सुरसङ्गमुख्याः।
वज्रात्मकोऽपि हरि–हस्त विभूषणोऽभूत्
लोकत्रयं जयति कीर्तिरियं दधीचेः।। 62।।

अस्थिप्रदानसमये च दधीचिपत्नी
कार्ये स्थिताऽऽश्रमगता दयिताऽपि नासीत्।
साभ्येत्य जीवरहितं स्वपतिं विलोक्य
गर्भान्विता सपदि विस्मयमाप साध्वी।। 63।।

पार्श्वस्थपिप्पलतरोरधिभूमिमेषा
संस्थाप्य गर्भमपि शास्ति सरस्वती सा।
भुक्त्वाऽथ पिप्पलफलान्यपि पिप्पलादः
श्रीमद्दधीचितनयो भुवि भाति वत्सः।। 64।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदनु पतिमवाप्ता सा सुवर्चा स्वपुत्रम्
बहु समयनिवासं पिप्पलाधो विधातुम्।
मुनिकुलतिलकत्वं प्राप्तुमाशीर्विधाय
ह्यशपदपि च पुत्रैर्हीनता निर्जराणाम्।। 65।।

सा सुवर्चा विहायात्मजं 'दुःखिता
पत्युरन्तं गता देवताभ्योऽशपत्।
पुत्रहीनाः सदा सन्ति देवा दिवि
प्रायशो भोगिनो नो लभन्ते फलम्।। 66।।

पिप्पलादो मुनिर्भार्गवो भूतले
गोत्रदेवो बभौ वत्सनामा कुले।
भाति जागर्ति चाद्यापि सारस्वतं
साम्प्रतञ्चापि दाधीचनाम्ना कलौ।। 67।।

च्यवनमुनिभवा ये भार्गवा लोकवन्द्या
जगति विदितबोधा दीप्तिमन्तस्तपोभिः।
परशुधरममोघं पौत्रमाप्तं च येन
जयति भुवि महीयान् विश्रुतश्चौर्वदेवः।। 68।।

नृपतिवंशभवा भृगुवंशजान्
स्वबलतोऽपि पराक्रमतस्तथा।
समधिकं प्रविलोक्य रुषान्विताः
गतबलाः भृगुजेन कृताः क्षणात्।। 69।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन विरचिते भार्गवीये दधीचिचरितं नामाष्टमः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# नवमः सर्गः

मनुसुता च्यवनेन विवाहिता
सुतमसूत तपोधनमारुषी।
भुवि सदौर्व इतीरित आप्नवान्
बुधवरोऽपि बभूव धनुर्धरः।।1।।

उरुगुणैरुरुगीतयशोऽमलो
गुरुभिरेधितबोधमतिर्द्विजः।
ऊरुभवोऽभवदौर्वमुनिः स्तुतो
भृगुकुलाब्धिशशिः प्रशमान्वितः।।2।।

भृगुभवानथ हिंसितुमुद्यता
विकृतबुद्धितया च धनेहया।
धरणिपाः प्रविलोक्य तदारुषीं
सवृषणाममिताश्च बभुः स्थिताः।।3।।

उदरगर्भविनाशहिते रतान्
समवगम्य नृपानथ साऽरुषी।
कृतवती वृषणस्य च रक्षणं
सुतमुरुस्थमवेदि च तैस्तदा।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परिवृतामरिभिर्जननीमवैत्
प्रकटितः प्रविदीर्य तदोरुकम्।
वृषणदीप्तिमवेक्ष्य मृता इव
समभवंश्च नृपा विमनायिताः।।5।।

दिनकरांशुनिभं मुनिमौर्वकम्
मुषितदृष्टय आश्वलोक्य तंम्।
सनयना अनयेन विदृष्टयो
भुवि च भूपतयो बभुरुन्मदाः।।6।।

मुमुहुरेव नृपा हतदृष्टयः
शरणमाययुरौर्वमुनेस्तदा।
नहि विलोचनताऽवनिपेष्वलं
प्रभविता भुवने च कुलान्धता।।7।।

विनयना निखिलान्वयसंभवाः
समवलोक्य मुनिं शरणागताः।।
अवदनाशु च पाहि मुने! नतान्
विमतिकानथ तेऽहितचिन्तकान्।।8।।

मुनिरवेक्ष्य नृपान् शरणागतान्
स्वतपसाऽह्रतनेत्रविभायुतान्।
विनयतश्च तुतोष महीसुरः
परिददौ तपसा पुनरीक्षणम्।।9।।

निजकुलान्तकरानपि वन्दनाद्
पुनरदान्नयनेक्षणमेव सः।
जयति चौर्वकृताऽत्र दयालुता
परहिताचरणे मुनयो रताः।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्वचिदृचीकमुनिः क्वचिदौर्वकः
क्वचिदयं प्रथितश्च मुदाप्नवान्।
च्यवनसूनुरयं च सतां गुरुः
युधि तथैव सुचापभृतां वरः।। 11।।

रणकलानिपुणोऽपि विचक्षणो
महिसुरोऽपि युधिष्ठिरतां ययौ।
हरिरलोकयदस्य गुणाढ्यतां
स्वयमदादथ वैष्णव कार्मुकम्।। 12।।

शमितवृत्तिरभूच्च तपोधनः
विजितवृत्तिरभूद् विजयी रणे।
वहति शास्त्र कला अधिशस्त्रजा
जयति चौर्वमुनिर्बहुविद्यया।। 13।।

निजपितुश्च षडंगपुरः सरम्
निगमबोधमशेषपुराणजम्।
विविधदर्शन शास्त्रसुपाटवं
समधिगम्य बभूव भृगूद्वहः।। 14।।

पुरुभवस्य जयस्य कुले मुनि
स्त्रिपथगाम्बुततिं परिपीय यः।
भुवि भगीरथवन्दनया पुन
र्व्यसृजदेव स जह्नुरभूत् प्रियः।। 15।।

सुरनदीतटराज्यपतिस्तदा
ह्यवति कान्ययुतं भुवि कुब्जकम्।
मुनिरयं परिलब्धुमगात् स्वयं
नृपसुतामभि गाधिनृपान्तिकम्।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुशनृपः सममूदथ जह्नुतः,
कुशसुतश्च कुशाम्बुनृपो भुवि।
भवति गाधिनृपस्य जनिस्तत
स्तदनु सत्यवती तनया जनिः।।17।।

जगति गाधिसुता मधुराकृति
र्युवजनेषु च रूपगुणश्रिया।
नृषु च सत्यवती प्रथिताऽभवद्
भृशमृचीकमुनिश्च जगर्ध ताम्।।18।।

नवगृहस्थमतिर्ललनामतिः
मनसि सत्यवतीमनुचिन्तयन्।
नृपमृचीकमुनिः समयाचत
रहसि गाधिमुपेत्य तपोधनः।।19।।

समकरोच्च नृपोऽतिथिपूजनम्
कथमिहागमनं भवतो मुने।
अपि वने कुशलं नियमादिषु
व्रतमिदं मम चाश्रमरक्षणम्।।20।।

मुनिरुवाच ममाश्रममंडले
कुशलता नृपते! तव रक्षणाद्।
तपसि वीतभयाश्च तपस्विनो
भवति चाध्ययनं हवनं सदा।।21।।

श्रुतिगता भम सत्यवतीगुणाः
परिणयाय सुतां तव कामये।
इह च याचितुमेव सुताकरम्
समगमं नृपते! तव सन्निधौ।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मम सुताकरपीडनमंगलं
मुनिसुतेन कथं भविताऽमुना।।
विसदृशञ्च विलोक्य वरं तदा
मुनिमुवाच नृपो विनयान्वितः।।23।।

कुशिकवंशभवा वयमत्र भो!
कठिनताऽस्ति सुताग्रहणे च नः।
प्रथितशुल्कतया सुलभा भवेद्
मम सुता श्रृणु भार्गवनन्दन!।।24।।

शशिनिभाश्च सहस्रमिता हया
असितकर्णयुताः समलंकृताः।।
मम सुताकरपीडनशुल्कता
भवति यच्छतु चेद् भवतां रुचिः।।25।।

कुशिकजां परिणेतुमृषेर्मतिः
समुदिताऽपि निशम्य हयार्थिताम्।
वरुणदेवमुपेत्य स भार्गवः
निजकथामखिलां समवर्णयत्।।26।।

परिसमाप्य तपोऽध्ययनं प्रभो!
मतिरभूच्च विवाहविधौ मम।
अभिलषामि च गाधिसुतां हृदा
न लभतेऽधिकशुल्कतया हि सा।।27।।

यदि कृपा भवतां मयि संभवेत्
असितपाण्डुहयैरधिगम्य ताम्।
परिणयं च विधाय गृहस्थताम्
निजगृहे मुदितोऽथ भवाम्यहम्।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परिनिशम्य मुनेर्वचनं सुधीः
परहिताचरणे निरतः सदा।
असितकर्णयुतानददात् हयान्
करुणया वरुणो मुनये कृती।। 29 ।।

कुशिकवंशभवाय च गाधये
शशिसहस्रमितानसितान् हयान्।
शशिमुखीं परिणेतुमथार्पयद्
मुनिजनेषु च दुर्लभता कुतः।। 30 ।।

निजसुताकरपीडनशुल्कतां
समधिगम्य नृपोऽपि च कौशिकः।
भृगुकुलस्य तदौर्वमुनेः करे
निजसुताकरदानमथाकरोत्।। 31 ।।

मनसि संस्फुरितां दयितां प्रियाम्
युवतिवृन्दमणिं युवतिं श्रिया।
विलसतीव गृहे प्रविलासिनीम्
समधिगम्य मुनिर्मुमुदे भृशम्।। 32 ।।

मधुरिमा मुनिमोहमदाञ्चिता
मदयतीव च सत्यवतीतनौ।
मदिरवीक्षणतः सुविलासितां
जनयतीव मुहुःस्मितमातनोत्।। 33 ।।

यदुरुयुग्मगतं पुरुचिन्तितम्
तदुरुसंभवमानसहर्षणम्।
यदुरुकेलिरतं निभृतं रतम्
तदुरुबोधतयाऽविरतम् रतम्।। 34 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सघनकेशततिर्घनमण्डलम्
स्मितमुदारमहो तडितां द्युतिः।
भृकुटिरिन्द्रधनुर्नयनान्यलं
विषमबाणशरत्वमुपाययुः।।35।।

वशितदृग्भिरियं वशिनं गृहे
वलयितेन गतेन वशेऽकरोत्।
न मनुते मुनिरद्य वशंवदः
निगड़ितोऽभवदाशु हृतस्मरः।।36।।

सुरतकेलिरताऽप्यथ कौशिकी
मुनिमपत्यमयाचत चैकदा।।
गृहमभूद् गृहिणीपरिरंभतो
गृहविभूषणताऽपि सुते स्थिता।।37।।

निखिलकामकलानिरतेन किम्
युवजनाङ्गसुखेन च यौवने।
फलति किं सदने न भवेच्छिशुः
यदि गृहस्थमतिर्न फलान्विता।।38।।

सुतमचीकमताशु च गाधितः
तदनु सत्यवतीजननी तदा।
चरुविधानमशेषविधानतः
मुनिरयं विचकार तयोः कृते।।39।।

मुनिरगादभिषेकविधौ नदीं
चरुमनेकविधैरथ मन्त्रकैः।
समभिमन्त्र्य च दातुमियेष सः
विधिरयं विपरीततयाचरत्।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निजसुताय चरुर्भवितोत्तमो
हृदि विचिन्त्य च तज्जननी तदा।
चरुमदात्प्रति सत्यवतीं सुताम्
समधिगम्य चखाद मुदान्विता।।41।।

स्वकुल धर्मपुरस्कृतमंत्रकैः
यमभिमन्त्र्य पपाच चरुं मुनिः।
सुतविमोहतयाऽऽत्त मनस्विनी
झटिति सत्यवतीजननी तदा।।42।।

विनिमयेन च सत्यवतीचरुं
नृपतिधर्मचणैरभिमन्त्रितम्।
कृतवती ग्रहणं ह्यविजानती
फलमहो! विधिरेव बली सदा।।43।।

जगदतु मुनिमागतमेव ते
विनिमयो यदभूदनयोश्चरोः।
मुनिरुवाच विचिन्त्य विधेर्गतिम्
कथमिदं घटितं च ममान्वये।।44।।

श्रृणु च सत्यवति! प्रसवो भवेत्
तव जगद्विजयी धृतदण्डकः।
विविधशास्त्रकलासु विचक्षणो
निखिलशस्त्रकलाविदरिन्दमः।।45।।

तव सहोदर एव सतां मतिः
द्विजवरो भविताऽखिलवेदविद्।
परिनिशम्य भयेन च कम्पिता
भृगुपतिं परितोषयितुं रता।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विधिवशाद् दयितानतिभिर्मुनिः
परितुतोष हृदाऽनुशयः कृतः।
समवगम्य बभाण च कौशिकीं
भवतु नो तनयस्तनयाऽत्मजः।। 47।।

मनसि यस्य हरेर्भवितांशकः
परशुरामपिता भृगुनन्दनः।
नभसि सप्त मुनित्वमगाच्च यः
स जमदग्निमुनिर्भुवि चौर्वजः।। 48।।

निजपितुर्निगमागमपाटवं
भृशमधीत्य सुधीर्जमदग्निकः।
मुनिजनाचरणं तपसाञ्चितम्
हुतहुताशसमप्रभमादधे।। 49।।

व्रतयमादिभिरर्चिरिवास्फुरद्
प्रचलदर्चिभिरुज्झितकल्मषः।
विबुधवंदितविप्रमतिं गतो
वहति धर्मधुरं जमदग्निकः।। 50।।

घनरुचा घनसाररुचाऽमला
द्युतिवहा तपसाऽखिलपावनी।
गतवयाऽपि च पुण्यभृता शुभा
परिणता तटिनी भुवि कौशिकी।। 51।।

नवतपोभिरिवाम्बुवहा कलौ
सुकृतवारिवहा गतकल्मषा।
जगति पावयितुं कृतविग्रहा
नदति सत्यवती सरितांवरा।। 52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शतसुता जमदग्निसहोदराः
समभवन्नथ चौर्वभवाःशिवाः।।
भृगुकुलं परिवर्द्धयितुं रताः
कृततपाः सुतपाः समलंकृताः।।53।।

दिवमुपेतुमृचीकतपस्विने
ऽर्पयनशेषभुवं निजशासिताम्।
द्युतिमताऽकृत शाल्वनृपेण यत्
तदिह कीर्तिरबाधितकर्मणः।।54।।

कृतमृचीकमुनेस्तपसा पुनः
प्रथमतो वडवानलदर्शनम्।।
परिचितोऽब्धिभवोऽग्निरभूदहो
जगति चाऽऽप्नुवता सह तद्युगे।।55।।

निजकुलान्तकरानथ शासकान्
सपदि हन्तुमयं मुनिरुद्यतः।
जलधिमध्यगतश्च तपोरतो
रिपुगणान् समतापयतानिशम्।।56।।

भवविनाशमतिस्तपसा रुषा
रिपुविनाशमलं विचकार सः।
पितृगणा मुनिमेत्य जगुस्तदा
त्यज मुने निजरोषमनिष्टदम्।।57।।

पितृगणैरुपदिष्टतया मुनिः
व्यसृजताब्धिजले बडवानलम्।
पितृजनोक्तिमपालयदौर्वकः
भृशमतोषयदेव विनीतवद्।।58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्थं समुद्रगतमग्निमनेन कृत्स्नम्
विज्ञाय ज्ञापयितुमेव कृतः प्रयासः।
लोकेऽग्निशोधकृदभूद् भृगुनन्दनोऽयं
जागर्ति विद्युदभिधानयुताऽस्य कीर्तिः।। 59।।

और्वेण शान्तिमतियापितजीवनेन
संस्थापितोऽन्वयसुबोधभरः प्रशस्तः।
सप्तर्षिमण्डलगते जमदग्निनाम्नि
पुत्रे प्रभेव शशिनीह यथा दिनेशः।। 60।।

गोत्रेण च प्रवरदेवधियाऽद्य लोके
जीवत्यहो भृगुकुले मुनिराप्नवांश्च।
और्वोमुनिश्च्यवनदेवसमन्वितोऽपि
माद्यन्ति मोदभरिताः प्रवरर्षयश्च।। 61।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये**
**और्वचरितं नाम नवमः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# दशमः सर्गः

साङ्गानधीत्य निगमान् जनकात् तपस्वी
गेहे बभौ गुरुरथाक्षरदोऽधिविद्यः।
ब्रह्मप्रदोऽयमधिगत्य तथाऽगमाब्धिम्
मन्त्रानुचिन्तनपरो जमदग्निदेवः।।1।।

ध्यायन् ददर्श नव–मन्त्रततिं विशिष्टां
लोके बभूव मुनिरेष सु–मन्त्रदर्शी।।
सूर्यादवाप तपसा च ससर्परीति
विद्यां कदापि बहुविज्जमदग्निदेवः।।2।।

शक्तिं जिगाय च वसिष्ठसुतं प्रयुज्य
विद्यामिमां मुनिगणेष्वभिनन्द्यमानः।
काले ददौ तदपि गाधिसुताय धीमान्
विद्यागुरुर्विजयते जमदग्निदेवः।।3।।

प्रादुर्बभौ कुशिकगोत्रभुवां विरोधो
वासिष्ठजो भृगुसुतैः कुशिका मताः स्युः।
अध्वर्युताऽपि विहिता जमदग्निदेवै
र्यज्ञे तदा च हरिचन्द्रकृतेऽद्वितीये।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दारिद्र्यशंकितमतिः कृतवान् तपस्वी
चातुर्निशं मखमथान्वयभूतिकामी।
नाद्यापि चोज्झति गृहं भृगुवंशजानां
लक्ष्मीः कदापि भवतीह दरिद्रता नो।।5।।

वेदागमेषु विधिनैष कृताधिकारम्
देवाधिपोऽथ जमदग्निमुनिं विधिज्ञम्।।
विज्ञाय वैदिकविधीनिह बोधनाय
प्रायूयुजद् भुवि च वर्तयितुं सुबोधम्।।6।।

कण्वात्रिभिश्च वरुणाश्विभिरेव साकम्
यो वीतहव्यमुनिनाऽसितसोमनाम्ना।
भूयः स्मृतो मुनिवरो भृगुकीर्तिमूर्तिः
कालात्ययेऽपि जमदग्निमुनिश्चकास्ति।।7।।

यो वैष्णवं धनुरवाप पराक्रमेण
प्रीतेन चैव जनकेन कुलागतेन।
नैपुण्यमाप तपसीव च युद्धविद्या–
स्वौर्वोद्भवो विजयते जमदग्निदेवः।।8।।

यो लक्ष्यवेधनिपुणेष्वधिराज आसीत्
यो लक्ष्यवेधपरिहीनमतिर्न चाल्पः।
सूर्योऽपि यस्य शरलक्ष्यमतिं विलोक्य
भीतो ययौ शरणतां जयतीह देवः।।9।।

बाणप्रचालनरतो निजलक्ष्यनिष्ठः
प्रोद्वाहितोऽपि जमदग्निमुनिः सदैव।
विद्धोऽपि रेणुतनयाक्षिशरैर्न दीनः
पाणिग्रहेण परिणीय धनुर्धरोऽभूत्।। 10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्याश्चतुर्दशविधाः समुवाह विद्वान्
पूर्वं ततोऽपि परिणेतुमियेष चान्याम्।
कन्याञ्च रेणुनृपतेरथ रेणुकाख्यां,
साऽऽप्यस्य पादयुगरेणुरता बभूव।। 11।।

लक्ष्यानुवेधनिपुणोऽभ्यसनेऽनुरक्तो
नित्यं शरप्रहरणाहरणानुयुक्ता।
बाणान् समुह्य मुनयेऽर्पयती मनोज्ञा
पत्युश्च सेवनरता खलु रेणुकाऽभूत्।। 12।।

चण्डांशुभिस्तपति चाभ्रमणौ कदाचिद्
क्षिप्तान् शरान् परिसमुह्य मुनेः समीपम्।
आदातुमीप्सितमनाञ्च विलम्वमाना
मर्द्धाङ्गिनीं प्रति चुकोप पतिः प्रतापी।। 13।।

सा वेपमानहृदयाऽपि च रेणुकन्या
क्रोधोल्बणं पतिकृतं नितरां न सेहे।
मार्तण्डचण्डकरबाधितपादयुग्मा
बाणार्पणे नहि शशाक पतिं जगाद।। 14।।

क्रोधाभिमूर्च्छिततनुर्जमदग्निरेनं
व्यद्धुं सहस्रकिरणं च शरैरियेष।
वीक्ष्यांशुमानपि शरे धनुषि प्रयुक्ते
यातो मुनिं नतिभिरीडितवान् धृतार्चिः।। 15।।

त्रातुं तथा तपनतश्च मुदाऽतपत्रम्
पादूर्द्वयं च समदात् पदयोः पतंगः।
आविश्चकार भुवने नवपादुकां य
श्छत्रं नमोऽस्तु मुनये जमदग्नये च।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यश्चातपत्रमतिकोऽपि निजातपेभ्यः
सम्पालयत्यखिलभूतधरां धरित्रीम्।
पादैः सदार्पिततनुर्भुवनांशुमाली
सोऽदात् शिरः पदयुगातपवारणं च।।17।।

विद्याधिगन्तुमुदयाय ततापं दीर्घं
नैदाघमाधिमपि नागणयत् तपस्वी।
पूर्वं शराभ्यसनकर्मसमर्पितोऽद्य
सूर्यं शरण्यमकरोन्नतिरस्तु तस्मै।।18।।

कोपान्विताश्च भृगुवंशभवा भवन्ति
श्रृण्वन् कदापि मुनिरेष शुशोच योगी।
शान्तो नियंत्रितगतिश्च वशी वरेण्यः
क्रोधं विजित्य जमदग्निमुनी रराज।।19।।

श्राद्धाय चावहितबुद्धितया कदाचिद्
भक्त्या पपाच विधिनैष सुपायसान्नम्।
क्रोधः परीक्षणधिया प्रबभूव सर्पः
पात्रे चकार गरलोद्वमनं च तत्र।।20।।

दृष्ट्वा विगर्हितमिदं ननु वीतकोपः
स्थानान्मुनिर्न विचचाल जजाप चेशम्।
क्रोधश्च भार्गव कुलागतरोषवृत्तिं
सस्मार तत्र जितकोपमथासशंस।।21।।

क्रोधाहिदंशविष निर्विषतां विलोक्य
क्रोधोऽपि विस्मितमतिः प्रशशंस भूयः।
धन्यो वशी गतविकारमतिर्मनस्वी
जीव्याच्चिरं विजयतां जमदग्निदेवः।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वेदार्थचिन्तनपरोऽपि च मंत्रनिष्ठो
मन्त्रान् वशीकरणजान् यदथर्वजातान्।
दृष्ट्वा च लोकहितमाचरितुं प्रकाश्य
तेषामृषिर्विजयते जमदग्निदेवः।। 23।।

केशाभिवर्द्धनकराणि चखान वेत्ता
द्रव्याणि चाथ विचकार परोपकारम्।
दानग्रहं न मनुते मनुते स्वबोधम्
तं भार्गवं च जमदग्निमुनिं नमामि।। 24।।

रात्रिन्दिवं मुनिरयं तपसा तताप
प्रीतश्च नाकपतिरेत्य जगाद कामम्।
धेनुप्रियाय मुनयेऽप्यथ कामधेनुं
प्रादात्सदातिथिगणार्चनभावनोत्कः।। 25।।

जातश्च गोवधविरोधमतिर्महात्मा
मन्त्रान् जजाप नियमानुगतस्ततताप।
रेजे तपस्विषु दिनेशविभाञ्चितार्चि
र्देवैर्नुतोऽथ भुवने जमदग्निदेवः।। 26।।

गो–सेवनोर्जिततपः स्फुरदग्रकान्ति
र्गोपालनेऽर्पितमतिर्भुवि गोषु निष्ठः।
गांश्चारयन् चरति धर्ममनेकरूपम्
गीर्वाणवन्दितमुनिर्जमदग्निरासीत्।। 27।।

क्रोधोल्बणत्वमपि कोपविहीनताऽपि
दानप्रतिग्रहविरोधरतोऽपि चार्थी।
प्रोद्यत्तपःस्वभिरतोऽपि धनुर्धरोऽपि
यस्मिन् तनौ स भगवान् जमदग्निदेवः।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यागी वशी सकलबोधविलासभूमिः
ज्ञानी व्रती विधुतदोषमतिर्यतीन्द्रः।
मानी मुनिर्युधि जयी भुवि वीरवीरो
राराज्यते स्म महितो जमदग्निदेवः।।29।।

रेणोः सुता रमयतीव मुनिं विरेजे
राज–प्रभा–समुदिता च रिरंसयाऽपि।
भोगोऽपि भुक्त इव तद्वयसा बभूव
कामो न शाम्यति कदाप्युपभोगवृत्या।।30।।

स्वेच्छाविघातनविधौ प्रथितोग्रतेजः
युद्धांगणेऽरिवधकर्मणि योऽस्ति धन्वी।
शान्त्यै तपस्यभिरतो विदितस्तपस्वी
कामानुविद्धमतिरेष रतीशमूर्तिः।।31।।

रेमेऽनिशं च सह रेणुकया तपस्वी
स्नेहस्य मूर्तिरिव दम्पतिजा परुश्च।
स्नेहोद्‌गत प्रसर कांक्षितदम्पतिम्यां
प्रादुर्बभौ, जगति तस्य सुता विभान्ति।।32।।

रुमण्वत्सुषेणो वसुश्चैव लोके
चतुर्थोऽस्ति विश्वावसुः पञ्चमोऽभूत्।
प्रभोरंशजो भार्गवो रामनामा
मता रैणुकेयास्तथा जामदग्न्याः।।33।।

रघुकुलेऽपि विभुः परमेश्वरो
यदुकुलेऽपि तथैव हरिर्बभौ।
भृगुकुले जनिरेव जनैः स्तुता
परशुराम मुनेर्भुवि भूतले।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शस्त्रेण शास्त्रेण विभूषितोऽपि
विप्रोऽभवत् क्षत्रियकर्मनिष्ठः।
तन्त्रे रणे यस्य सदाऽधिकारो
रामो जयत्येव च भार्गवः सः।। 35।।

जटाजूटं बिभ्रच्छिरसि नव रुद्राक्षसरणिः
ललाटे गौरांगे खचितशिव पुण्ड्रं करतले।
रिपूणां नाशार्थं परशुरुदितो भाति सततं
बलैर्बोधैश्चायं जयति भुवि रामो भृगुभवः।। 36।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये जमदग्निवृत्तवर्णनम् नाम दशमः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# एकादशः सर्गः

अथैकदाऽयं जमदग्निदेवः
पुत्रार्थमाराधयदीश्वरांशम्।
तुष्टो हरिर्भार्गववंशजातः
रामेति नाम्नाऽवततार भूमौ।।1।।

वह्निः सुरेन्द्रस्तपनश्च वायुः
हरिस्तथा पञ्च सुताः प्रसूताः।
पुण्येन जाता जमदग्निगेहे
दिव्यान्वये मातरि रेणुकायाम्।।2।।

सा रेणुका रम्यतराऽपि रेजे
धाम्ना दधाना हरिमेव गर्भे।
तौ दम्पती सर्वपतिं परेशं
प्रतीक्षमाणौ प्रकटोत्सवं स्तः।।3।।

यातानि वेदागमशीलनेन
सदा सदाख्यान निषेवणेन।
दिनान्यनिन्द्यानि च रेणुकायाः
प्रीतान्तरा सा पतिसेवनोत्का।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शेतेऽन्तरं सर्वगुहानिवासी,
प्रभुर्महर्षेर्दयिताधिवासी।
सा रेणुका वीतमलान्तरात्मा
नावेद्धि मायेरितमादिदेवम्।।5।।

मखाग्निकुण्डाज्जनिरेव यस्याः
तपः प्रभावाद् हरिमात्मजार्थम्।
प्राप्त्वा वरं रेणुसुता दधार
गर्भे हरिं शोकहरं जनानाम्।।6।।

विज्ञाय गर्भस्थितमादिदेवं
सुताः सदैवाहितभावबोधाः।
भेजुः प्रणेमुर्भुवमेत्य तूर्णम्
प्राकट्यकालं समुदीक्षमाणाः।।7।।

धर्मापकर्षश्च यदा यदाऽभूत्
लोकेऽवतारश्च तदा तदा ते।
दृप्तैर्महीन्द्रैरपशासिता भू
र्महीपते ताञ्च समुद्धर त्वम्।।8।।

धर्मं च सत्यं च सतां नृपाणां
त्राताऽसि हन्ता कुपथानुगानाम्।
प्रभो! धनान्धान् च शठान् रिपूंश्च
प्रशासितुं नः परिपाहि नम्रान्।।9।।

वयं त्वयाऽद्यापि च रक्षिताः स्मः
प्रताड़िताश्चासुरवाहिनीभिः।
धर्मानुगाराधनतोऽभिपुष्टाः
विस्रंसिता तैरथ पाहि चास्मान्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ससागरा भूः प्रचचाल तत्र,
चेलुर्गिरीन्द्राः सहसा वनानि।
सर्वाणि भास्वन्ति चकम्पिरेऽपि
संसूचयन्तोऽस्य शिशोः प्रभावम्।। 11।।

हृष्टा बभुः सर्वदिशः सुपुण्या
निशाश्च सर्वाः भुवि सुप्रभाताः।
तदा प्रदोषा अभवन् विदोषाः
शुचिश्च गोधूलिमयः सुकालः।। 12।।

मासे मधौ माधवगे सितेऽपि
रात्र्यागमे याऽस्ति तिथिस्तृतीया।
तस्यां च गोधूलिमये दिनान्ते
भृगोः कुलेऽभूदथ रामजन्म।। 13।।

राकापतिं पूर्णकलाभिलीनं
भास्वन्मुखं पूर्वदिशि प्रकृष्टम्।
दधार बालेव निशाऽथ शान्त्यै
यथाऽविरासीत् भृगुजस्तथैव।। 14।।

यथान्धकारे शुशुभे सुदीपः
भानुः प्रभाते च शशिः प्रदोषे।
वृहस्पति र्बुद्धिमतां सभायां
तथा जनिर्भाति च भार्गवस्य।। 15।।

यथा शशिः स्यात्तिलकायमानो
ललाटलग्नश्च निशातरुण्याः।
पयोधितः पूतमना मयंको
जज्ञे तथा भार्गववंशचन्द्रः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सा रेणुका पावकरेणुजुष्टा
यथा दिदीपे जनने स्वकीये।
प्रसूय विष्णुं जमदग्निसूनुं
भृशं वितेने स्वयशः प्रकाशम्।। 17।।

यस्यां कृतं दानमनंतगुण्यम्
चाक्षय्य पुण्यं व्रतमेति तिथ्याम्।
सर्वक्रियारम्भ मुहूर्तकालो
भवेच्च सा रामतिथिर्विरेजे।। 18।।

प्राच्यां यथा सूर्यविभा चकास्ति
कृष्णो यथा वृष्णिकुलप्रदीपः।
रामोऽपि सूर्यान्वयपूर्णचन्द्रो
बभौ तथा भार्गवसिन्धुचन्द्रः।। 19।।

नेदुर्मुदा दुन्दुभयो द्युलोके,
जग्मुः प्रमोदं च सुरर्षिसंघाः।
प्रसूनवृष्टिश्च दिवो बभूव
जाते सुते तादृशि रेणुकायाः।। 20।।

शंखध्वनिस्तालमृदंगपूर्णो
वीणास्वरो वेणुजनिःस्वनश्च।
द्विजैः कृतः सस्वरवेदघोषः
गीतानि लोकस्य जगुः स्त्रियश्च।। 21।।

श्रुत्वाऽप्यजस्यात्मजतां मुनीशो
स रेणुकाजानिरमूमुदच्च।
नान्दीमुखादीनथ जातकर्म
समाप्य विष्णुं मनसा जजाप।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुनर्वसौ कर्कगते हिमांशौ
जनिर्हरेरंश भवस्य लोके।
विज्ञाय लोको रमयाञ्चकार
तस्मिन् बभौ येन स रामनामा।।23।।

रूपेण कन्दर्पमधश्चकार
वह्नित्वमापद्यत तेजसैव।
समुद्रगांभीर्यमभूच्च सद्यः
क्षमा क्षमेवाजनि भार्गवेऽस्मिन्।।24।।

कदा स्वपद्भ्यां भुवि रिंगमाणः
तथा कराभ्यां लघु यानमासीत्।
स्खलद्गतिः शीघ्रगतिः कदाऽभूद्
नाजानतां तद्पितरौ कदापि।।25।।

भुवि स्खलन् धावति संपतंश्च
रजोऽभिषेकं प्रहसन् कदापि।
विभेति मातुश्च निलीयतेऽपि
क्रीडन्नयं बालवयो निनाय।।26।।

पितुः समीपे पठतां जनानां
मंत्रान् निशम्याथ सहोदराणाम्।
श्रुतिक्रमेणाभ्यसनाच्छिशोश्च
स्मृता बभूवुः श्रुतयः श्रुतेन।।27।।

यज्ञोपवीतस्य विधेश्च पूर्वम्
श्रुत्वैव मन्त्राः पितुराननाच्च।
मुखस्थिताः सस्वर पाठयोग्याः
मुनेर्बभुश्चान्त्यसुतस्य बाल्ये।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इन्दोः कलेव प्रविकाशमानाः
पञ्चात्मजास्ते जमदग्निजाताः।
प्रपेदिरे मौञ्जिजविधेरवस्थाम्
प्रापुश्च मन्त्रं सवितुर्वरेण्यम्।।29।।

तेजश्च सावित्रमयं समन्त्रं
दधार दध्यौ च समारराध।।
रामोऽमिरामञ्च तपश्चचार,
भास्वान् हृदिस्थो विरराज भासा।।30।।

त्रिकालसन्ध्यामनुवर्तमानः
पितुर्मुखान्मन्त्रगणानवाप।
त्रयीमयोऽभूदथ वेदविद्या
माराध्य रामो विबुधेषु रेमे।।31।।

सांगानधीत्याखिलवेदभागान्
दिव्यं धनुर्वेदमवाप धन्वी।
श्रीवैष्णवं चापमवाप्य वीरः
पितुः कृपातो जगृहेऽनुकालम्।।32।।

कुलागतां शस्त्रंभवां सुविद्यां
कुलार्णवेन्दुं च विलोक्य पात्रम्।
विद्याश्च शास्त्राणि समर्पयित्वा
जातस्तपस्वी विशदान्तरात्मा।।33।।

प्रीतेन शक्रेण च रेणुकायै
पुरा प्रदत्तः सुरकल्पवृक्षः।
धेनुञ्च कामप्रसवां प्रदाय
चिन्तामणिञ्चापि ददौ सुरेशः।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सु–पादुके सिद्धियुतेऽद्वितीये,
हृष्टो ददौ देवपतिश्च तस्यै।
मात्रे तथाऽस्मै जमदग्नयेऽपि
सिद्ध्यै तपोभिः खलु रेणुकायै।। 35।।

गृहे पितृभ्यामभिनन्द्यमानां
सिद्धिं न मेने स्वकृते स रामः।
विद्यां तपोभिः परिलब्धुकामः
चिन्तापरोऽभूज्जमदग्निपुत्रः।। 36।।

क्वचित्पितुः पादयुगं प्रणम्य
बभाण बद्धाञ्जलिरेष रामः।
गुरो तवाज्ञां परिगृह्य यातुं
ममाभिलाषा तपसेऽस्ति चाद्य।। 37।।

अशेषविद्याधिगमो न मां चेद्
भविष्यतीत्थं न बिना शिवाज्ञाम्।
शिवोऽपि तुष्टो न तपो बिना स्याद्
तपश्च लोके ननु सिद्धिमूलम्।। 38।।

प्रेम्णा सुतं दूरतरं प्रयातुं
तपस्विनामन्यतमः पिताऽपि।
नाज्ञापयत्पूर्वमतो हठेन
संप्रार्थितश्चानुमतिं ददौ सः।। 39।।

अशेषविद्या अधिगन्तुकामो
विद्यागुरोर्भूधरराजमूर्ध्नि।
तप्तुं गतोऽभूत्तपसा प्रसादं
शम्भोः प्रतीक्षन्ननिशं तताप।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्याष्वशेषासु कृतोऽधिकारः
श्रीशंकरः सर्वगुहा निवासी।
शेते हिमाद्रौ पितुराज्ञयाऽयं
यातो व्रतार्थं जमदग्निजन्मा।। 41।।

न लभ्यते यत्तपसाऽपि लोके
श्रुतं न दृष्टं मुनिभिः कदाचिद्।
विज्ञाय तं प्रीणयितुं गिरीशं
रामस्ततापाथ गिरीशपृष्ठे।। 42।।

इत्थं शिवाय शिवभक्तिपरायणोऽभूत्
विद्यार्थिनां सफलतामधिदेवसिद्ध्यै।
विद्याभिरेव सुतरां भुवि च द्विजस्य
शोभैधते च गुरुताऽप्यथ सिद्धिलाभः।। 43।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये परशुरामप्रभवो नाम एकादशः सर्गः ।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# द्वादशः सर्गः

विविधबोधभृतो निगमागमान्
पितुरवाप शिशुः स्वकुलागतान्।।
न च तुतोष तथापि भृगूत्तमः
शिवमुपासितुमेव मनो दधे।।1।।

जिगमिषन्तपसे च नगाधिपं
जनकभक्तिपरः शिशुरन्तिमः।
विपुलवत्सलभावसमन्वितं
पितरमेत्य ननाम जगाद नो।।2।।

विनयतो नयतः प्रणयाद् प्रियम्
निजपदाब्जनतं तनयं पुरः।
विनतकन्धरमाह विलोक्य तं
जनिकरो जमदग्निमुनिस्तदा।।3।।

सुत! कथं वदनं विमनायते
वद विवक्षसि किं च विधित्ससि।
तव चिकीर्षितमेव मतं मम
भयमपैतु मुदं समुपैत्वलम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मम कुलस्य विशारदता गुरो
मयि विभाति दयालुतया त्वया।
सदुपदेश विधौ च मुखाब्जतः
तव शिवः खलु विश्वगुरुः श्रुतः।।5।।

तव कृपाजलदामृतवर्षणम्
नवसुधारसपूरितवत्सलम्।
शिशुतयैव गृहे लभते सदा
न परिहातुमहं क्वचिदुत्सहे।।6।।

जनिकरोऽसि गुरुर्बहु मन्त्रदः
सदविता मम वाञ्छितदः प्रभुः।
यदि तथापि मतिः शिवदर्शने
मम भवेन्न च वेद्मि करोमि किम्।।7।।

अनुमतिर्भवतां यदि लभ्यते
मम गतिश्च तदाद्रिपतिं प्रति।
ननु भविष्यति येन हितं मम
तदनुशाधि गुरो! प्रकरोम्यहम्।।8।।

परिनिशम्य वचांसि तदा मुनिः
सुतमुवाच शुभं प्रसशंस च।
यदि गुरुर्गिरिशस्तव स्यात्तदा
भृगुकुलस्य भवेद् गुरुता भुवि।।9।।

शिवकृपाभरिता भृगुवंशजा
विविधशास्त्रविचक्षणताऽमृता।
मम कुलेऽस्ति शिवेन समर्थिता
भज शिवं सुत! भीतिहरं प्रियम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तव कुलप्रभवाः पितरः सदा
शिवमुपास्य मुनित्वमगुः पुरा।
त्वमपि शंभुमवाप्य जयं यशः
स्वतपसा गुरुणा च वृणीहि शम्।। 11।।

पितुरवाप्य मुदाशिषमुत्सुकः
स्वजननी–चरणौ प्रणनाम सः।
मनसि संस्मरनीशमथाश्रमाद्
पठितुमिष्टमतिः प्रचचाल वै।। 12।।

हिमवतः शिखरं शिवपर्वतम्
समुदियाय च भार्गवभूषणः।
चितिरजो धवलीकृत विग्रहं
समवलोक्य चकार पदानतिम्।। 13।।

अधिगतञ्च शिवााशिषमुज्ज्वलम्
प्रभुदृशैव पुरा मुनिनाऽर्जितम्।
निखिलबोधभरञ्च समर्थितम्
तदनु चारभतान्यकलागमान्।। 14।।

शिव शिवेति जपन् व्रतमादधन्
शिवकृतेऽखिलकर्मसृतिं सरन्।
सदुपदेशतयाऽधिगतं स्मरन्
शिवरतश्च बभौ जमदग्नि जः।। 15।।

चरणयुग्ममथोर्ध्वमधारयत्
परितताप च पञ्च हुताशनान्।
हृदि दधे शिवमन्त्रमुदीरयन्
तपसि तोषयितुं तपसा शिवम्।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शरदि वर्षति चण्डरवावपि
हिमकरे मकरेऽपि दिवाकरे।
शिवमुपासितुमेष दिवानिशम्
प्रयतते तपसा महतोर्जितः।।17।।

सततमिन्द्रियनिग्रहणे रतः
जपति शंकरमन्त्रगणानयम्।।
परिजुहोत्यनलं शिवमन्त्रकै
र्गिरिपतिं परितोषयितुं रतः।।18।।

नमति गायति कीर्तयतीच्छति,
भजति चिन्तयति प्रजपत्यलम्।
शिवमनादिमथार्पयतीप्सितं
भयहरं परितोषयितुं रतः।।19।।

समधिगम्य पितुर्हरिकार्मुकम्
भृशमधीत्य तथा धनुरागमम्।
युधि कला विविधाः शिवतः पुनः
समधिगन्तुमियेष स भार्गवः।।20।।

बहु–दिनानि गतानि तपस्यतो
भृगुसुतस्य तुतोष शिवस्तदा।
बहु तपोभिरिवार्चितविग्रहः
सपदि दित्सुरुवाच भृगूत्तमम्।।21।।

वरय भार्गवनन्दन! चेप्सितम्
वरमलं वरदोऽस्मि सुतोषितः।
परिनिशम्य मुदा जमदग्निजो
विमलबोधमयाचत शंकरम्।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अवनिमण्डलपालनचक्षणा·
नृपतयः कृतवीर्यभवाः प्रभो।
मम कुलान्तकराः प्रथिताः कथं
विनिहता भवितार उदीरय।।23।।

विपुलरत्नमयञ्च शरासनम्
मुनिसुताय पिनाकमदात् शिवः।।
परशुमेव ददौ रिपुनाशकम्
प्रहितमेति करे च रणे पुनः।।24।।

परशुना च परासुनिषूदनात्
पशुपदत्ततया परशुद्धितः।
परशुहस्तविभूषितविग्रहो
परशुराममुनि र्भुवि गीयते।।25।।

विविधबोधविचक्षणपाटवी
विबुधता निगमागमचातुरी।
महिसुरान्वयपाठनपद्धतिः
शिववरेण च रामगता बभुः।।26।।

शिवपुरे गणपेन गुहेन च
सह पठन् भृगुजस्य मतौ स्थिता।
प्रखरशास्त्र विचारण दक्षता
ह्यभवदिन्दुशिरोमुखनिः सृता।।27।।

सह पठन् निवसन् सह निर्गमन्
विवदनैश्च मुनेः समयं ययौ।
गजमुखेन गुहेन समं सदा
विबुधताऽपि तथैव मता बुधैः।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरुमुखाच्च यथाश्रुतमग्रहीत्
सततमभ्यसनं च तथाऽकरोत्।
मतिमतां वर एव बभौ सतां
मतमभूज्जमदग्निभवो भुवि।।29।।

क्वचिदयं परिहासरतः सुधी
र्गजमुखेन गुहेन समं मृषा।
गुरुगृहे कलहानुरतोऽ भवत्
ननु शिवाशिवयोश्च कुतूहलम्।।30।।

गिरिपतिर्गिरिजापुरतः स्थितः
सुत मुवाच गुहं च गजाननम्।
प्रहरताञ्च पुरःस्थममुं गिरिं
न विवदन्तु मिथश्च सुताः गृहे।।31।।

पटुमतिः सुमतिः पृतनापतिः
प्रहरणं च गिरेः कृतवान् गुहः।
भुवि पपात गिरेः शिखरार्द्धकम्
न शिखरं शशिशेखर सम्मुखे।।32।।

शरमधिज्यमभूद् धनुषो यदा
भृगुपतेश्च शिवस्मरणं तदा।
निजमुखाच्च शिवं धनुषः शरं
सह समत्यजताशु भृगूत्तमः।।33।।

परशुरामशरस्य विभेदनात्
गिरिरथाच्छिनदत्र बिलं बभौ।
अतति रामयशस्ततिरुद्गता
बिलतयेह परत्र तथाऽधुना।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सततमुत्तरमानसमुत्सुकाः
यतिवरा अपि हंसगणास्तथा।
परशुरामशराध्वगताः सदा
मुनिवरस्मरणानुगतिप्रियाः।। 35।।

समवलोक्य पराक्रमसौभगं
परशुरामकृतं गिरिजापतिः।
परिजहर्ष ददौ च शुभाशिषम्
गुरुकृपाम्बु विभूषितभार्गवः।। 36।।

क्वचिदयं तु षडक्षर मन्त्रकम्
समधिगम्य मुनेरथ कश्यपात्।
निशिदिनं च प्रजप्य जितेन्द्रियो
यतिरभूदपि मन्त्रविदां वरः।। 37।।

हिमवतः शिखरे च तपोरतः
गुरुनियोगमनुस्मरणान्वितः।
अलभतास्त्रविधारणयोग्यतां
न च विजेतुमलं नृसुरासुराः।। 38।।

सुतपसा किमलभ्यमहो! भुवि
भृगुसुतः प्रविचार्य दृढं तपः।
परिचचार बभूव गुरोः प्रियः
हरिषडक्षर मन्त्र जपान्मुनिः।। 39।।

व्रतधरो व्रतिभिः सह संवसन्
व्रतमशेषमुमापतिचिन्तनम्।
विदधदाशु शिवं समतोषयद्
परशुराम मुनिश्च बभौ मुनिः।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतियुगं विहिताचरणानि यत्
हरिकृतानि च तीर्थमयान्यलम्।
भुवि समेत्य च तानि दिदृक्षया
परशुराममुनिर्वनमन्वगात्।। 41।।

धरति या जननीव जनान् सदा
वहति सज्जननीव नृणां हितम्।
परि तनोति भुवश्च परिक्रमाम्
स जमदग्निसुतोऽपि च भूसुरः।। 42।।

धरणिमण्डलमेव परीत्य सः
सकलतीर्थनिषेवणपुण्यभाक्।
विविधशास्त्रकलाविदभूज्जयी
बहुविधास्त्रयुतो जमदग्निजः।। 43।।

भ्रमनयं भुवमाप हिमालयं
विपिनकन्दरमाविविशे मुनिः।
प्रहरिणा हरिणा समनुद्रुतं
द्विजसुतं ददृशे शरणागतम्।। 44।।

भयविकम्पितगात्रधरं शिशुं
रुदितमार्तरवाश्रुभृतं द्विजम्।
परशुराम! हरे! अनु पाहि माम्
समवलोकि गिरन्तमथाक्षरैः।। 45।।

तृणशरं प्रहिणोच्च रिरक्षया
स जमदग्निभवो हरये क्षणात्।
मृगपतिर्निहतश्च कुशाग्निना
द्विजसमेधित कोपभवाग्निना।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुशभवास्त्रहुताशनभस्मतां
वनपतेरगमच्च तनुः क्षणात्।
कनककान्तिभृदुत्थित एकतः
स्वतपसा गतकल्मषविग्रहः।।47।।

विगतशापतया हरितां जहौ
भृगुपतिं स्तुवनाप स्वकं पुरम्।
सपदि दुर्जनता विजहात्यहो,
निभृतसज्जनदर्शनपुण्यतः।।48।।

समुपजीवित आधिगतो वने
तदकृतव्रण आपदि रक्षितः।
प्रणतिभिर्भृगुपुत्रमतोषयत्
प्रथितकीर्तिरभूद् भुवि भार्गवः।।49।।

एवं हिमालयगतो जमदग्निसूनुः
कार्याणि वीर्यबलबोधकराणि कृत्वा।
सेवारतो निखिलबोधकरस्य शंभोः
लेभे शुभामथ कृपामपि सर्वदस्य।।50।।

विद्यागुरोरधिगता निखिलाश्च विद्याः
सेनापतिर्गणपतिः सहपाठिनौ च।
श्री भार्गवान्वयगताश्च धृताः सुविद्याः
येनाद्य तं परशुराममुनिं नमामि।।51।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये परशुराम विद्याराधनं नाम द्वादशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# त्रयोदशः सर्गः

अथैकदा सेन्द्रपुरोगमाः सुराः
प्रताड़िता राहुपराक्रमाद् भृशम्।
शिवं समीयुः शरणं भयातुराः
सहस्रशः शंभुपदं नभः स्पृशम्।।1।।

नमः समूचुः प्रणताः पिनाकिनम्
प्रभोः परित्राहि च सिंहिकासुतात्।
प्रतोष्य ब्रह्माणमसौ सुतस्य शं
सुरेभ्य आरक्षणमप्यचीकरत्।।2।।

वरं ययाचे स्वसुतस्य जीवनम्
ह्यवध्यता शत्रुगणैः सुरासुरैः।
अतो वयं तेन पराजिता मुहुः
न राहुरस्माभिरलं विजेयः।।3।।

न नाकलोकं परिरक्षितुं विभो
त्वया बिना नः शरणं क्वचित्प्रभुः।
प्रणम्यतेऽतो भगवन् प्रपाहि नः
त्वयैव देवाः परिरक्षिताः सदा।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वयं स्मरन्तः क्षमतां तवेप्सितां
रमामहे भोगयुते नभस्तले।
यदा भवेद्विघ्नमरातिभिस्तदा
तवांघ्रिकंजस्मरणे च नो रतिः।।5।।

यदैव लोको भृशमुद्विजेत भो!
विकारपाकैर्विविधैः सुखान्तकैः।
तदैव देवेश तव स्मृतिर्भवेत्
भजामहे स्वार्थधियो वयं सुराः।।6।।

नमामि शूलान्तकरं त्रिशूलिनम्
नमामि कालान्तकरं कपालिनम्।
नमामि संसारहरं सदाशिवम्
नमामि शान्तिप्रियमेव शंकरम्।।7।।

यदा यदा देवकुले प्रभीतयो
भवन्ति दैत्यैश्च सुताडिता भृशम्।
तदा तदा भीतिहर! प्रभोऽविता
त्वमेव भूत्वा परिपासि नः पितः।।8।।

यदा प्रभो देवकुलाभिरक्षकः
भविष्यसि त्वं न सुराभिवन्दितः।
तदा सृतेःपालयिता क ईश्वरः
त्वया बिनाऽन्यः प्रभवेद्धविर्भुजाम्।।9।।

निशम्य च स्तोत्रमिदं सुरैः कृतम्
सुशोच शंभुः सुरकार्यसाधनम्।
उवाच हर्षेण च सिंहिकाभवम्
सदानवम् हन्तुममुं च भार्गवम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रगृह्य तां शंभुगिरं भृगोर्भवः
विचिन्त्य कल्याणमथात्मनस्तदा।
त्रिविष्टपानाञ्च तथैव वीर्यवान्
जगाद मृत्योरपि मृत्युमानतः।। 11।।

न सैंहिकेयानसुरान् दुरासदान्
समर्थता मेऽस्ति विघातुमीप्सिता।
प्रभो! बिना ते कृपया न कश्चिन्
निहन्तुमन्यः प्रभवेन्मतिर्मम।। 12।।

न शक्रसेनाप्रमुखैश्च राक्षसाः
विघातिता युद्धगता यदा च ते।
मया ह्यनस्त्रज्ञतया कथं प्रभो!
पराजिता निर्जरशत्रवो युधि।। 13।।

अनायुधोऽहं परिहासवृत्तिजां
दशां गमिष्यामि बिना त्वया गुरो!।
यथा न ते स्याद्विफला मनोज्ञता
तथाऽनुशाधि प्रलयेऽपि मां प्रभो।। 14।।

विचिन्त्य तां भार्गवभाषितां गिरम्
ददौ च शैवास्त्रमशेषतेजसम्।।
अचीकथत् याहि जयं लभस्व वै
युधि प्रवीणो भव वेत्थ कौशलम्।। 15।।

मनुष्यदेहेन हरिर्युगे युगे
वधाय रक्षः कुलमाविरस्ति यः।
स एव रामः त्वमसि प्रशासकः
स्मरिष्यसि प्रेत्य नृदेवगीतिभिः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रगृह्य चाज्ञां शिवजां गरीयसीं
भृगूत्तमः पालयितुं समुद्यतः।
ननाम पादौ नगजापतेर्मुदा
रणाय वीरो रभसोच्चचाल सः।।17।।

स दानवानां गुरुवंशजन्मभाक्
शिवाज्ञया देवजनैरुपासितः।
निहन्तुमायात्यथ रामवीरकः
विचिन्तयामास सहानुजोऽसुरः।।18।।

गृहे च राहोः प्रतिकूलशंसिनः
दिने दिने पुण्यविनाशकारिणः।
सुदारुणोत्पातगणा विलोकिता
असूचयन् राक्षसवंशनाशनम्।।19।।

विदूयमानो मनसा तदेन्द्रजित्
सभां समाहूय जगाद राक्षसान्।
विनिर्जिता देवगणा भवादृशैः
सुविद्यया मे वरदानलब्धया।।20।।

मया जिता तेऽखिललोकपालकाः
सुराश्च सेन्द्राः स्ववरप्रभावतः।
सुरार्थितेनाद्य शिवेन भार्गवः
विसर्जितो राक्षसनाशकर्मणे।।21।।

शिवोऽपि शक्रप्रमुखैः प्रतोषितः
निहन्तुमस्मान् युधि शत्रुकर्षणान्।।
मनुष्यरूपेण समागतो हरिः
सुरारिहन्ता जमदग्निसंभवः।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्विजेन युद्धं भवितेत्यसंशयम्
समागतास्ते दितिजास्तदाविदन्।
विजित्य देवान् हतकण्टका वयं
कथं भविष्याम इति व्यचिन्तयन्।। 23।।

तदा स राहुर्निजवंशनाशकम्
द्विजं च पार्श्वस्थितमागतं पुरे।
विचार्य सर्वैः कुलजैः सहानुगैः
कविं प्रपेदे विजयेच्छयाऽसुरः।। 24।।

प्रणम्य चोवाच सुरैःकृतं भयम्
क्षयावहम् रामकृतं भविष्यति।
गुरो! शरण्यं शरणागता वयम्
प्रपाहि नस्त्वं दनुजाभिरक्षकः।। 25।।

सुरस्तुतिप्रीतिभरेण शंभुना
विधित्सुना देवहितं विसर्जितः।
द्विजोऽथ रामो हननाय नः कुलम्
जयेम नः शाधि यथा रणे तथा।। 26।।

कविः समेतानसुरानुपस्थितान्
विलोक्य संचिन्त्य विधेर्विधानकम्।
समादिशद्दर्पनिपाटनेच्छया
रणोद्यमं च प्रविधातुमुद्यतान्।। 27।।

न मानवानां दनुजैर्महारणम्
भविष्यतीन्द्रस्य कृते च शोभनम्।
वयं निहन्तुं युधि चोद्यताः सदा
शतक्रतुं देवपुरीप्रशासकम्।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वयं च नाकं बहुकालसेवनाद्
न हातुमद्य प्रभवाम ईश्वराः।
शिवेरितेनापि नरेण केनचि.द्
युयुत्सवः संगरसागरानुगाः।।29।।

सुरेप्सितां देवगणैरुपासिताम्
विलासितां भोगसमृद्धिसंभृताम्।
कथं द्युलोकस्य प्रभुज्य राक्षसाः
बिनाहवं तां परिहातुमुद्यताः।।30।।

न कोऽपि लोके परिलभ्य भोगवान्
विशेषभोगार्थितसंपदः क्वचिद्।
परित्यजन्मोदयुतो महीतले
न राक्षसा अत्यजनात्र किं पुनः।।31।।

निशाचरा लब्धवरा मदोद्धता
युधिष्ठिरा विव्यथुरेव केवलम्।
हता तदैकेन यदा गतासवे
गुरुं समेत्याहुरतन्द्रिताः पुनः।।32।।

गुरो! न मे शक्तिरथाद्य योधने
युधि प्रणष्टा मम युद्धपण्डिताः।
द्विजेन रामेण पराजिता वयम्
बलारिराज्यप्रियकारिणा ध्रुवम्।।33।।

निशम्य शुक्रो भृगुवंशजन्मनः
पराक्रमं भूरि मनस्यनन्दत।
तथापि शिष्यानदिशद् हितं गुरुः
शिवं विचिन्त्याथ बभाण नीतिमान्।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



हरेः सुरेन्द्रादिभिरर्चितात्मनः
प्रभावमिष्टं च मयाऽधिगम्यते।
न तेन युद्धं विजयाय राक्षसाः
भविष्यतीत्थं च विचारणा मम।।35।।

वरं विशिष्टान् मरणं प्रशस्यते,
पराङ्मुखत्वं न रणे सुरैः समम्।
विचिन्त्य विष्णोर्मरणं सुमङ्गलम्
वधाय युद्धं क्रियतां मनोहरम्।।36।।

सदा हरिः पापहरः प्रहारकः
भवत्यशेषस्य भवस्य पालनाद्।
सुरार्थितः सृष्टि–विधारणादलं
प्रभुर्निहन्ता जनिताऽऽविता तथा।।37।।

मखैरनेकैश्च तपोभिरुल्बणै
र्निरन्तराचारपरैः सदाशिवैः।
षडङ्गवेदाध्ययनैरथाच्युतो
ददाति मृत्योरपि धाम निर्भयम्।।38।।

उवाच शाल्वो भृगुनन्दनं कविं
यदा श्रुतः सर्वहरी रिपुर्मया।
विहाय राज्यं च भवन्तमागतो
जनस्तवायं शरणं तदा प्रभो।।39।।

जयेच्छया राहुरथाग्रजो मम
प्रहर्तुमिच्छन् जमदग्निसंभवम्।।
गतः ससेनः किमभावि संगरे
भियाऽद्य तेऽहं शरणं समागतः।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ प्रविष्टे सति भार्गवे पुरं
निशाचरो राहुरुदग्रसैन्यभृद्।
रणाय सेनाभिरलंकृतो ययौ
बभूव रामेण सहाहवं महान्।।41।।

तदा भुवि व्योम्नि च पार्श्वतः पुरः
शराश्च शस्त्रणि शिरांसि चासृजः।
समन्ततो व्याप्य विलोक्यते मृधे
जनैश्च साश्चर्यभयान्वितैरलम्।।42।।

महारणे राहुकृतेऽथ भार्गवः
तिरोहितः पांशुगतो यथा रविः।
ननाम सस्मार पुरारिमाशुगम्
तदा स रामो धनुषीह संदधे।।43।।

विकृष्य कर्णान्तधनुर्मुखेन सः
शिवेति मन्त्रं समुवाच शत्रुहा।
समं च चिक्षेप शरं विषोपमं
पुरश्च राहोर्जमदग्निसंभवः।।44।।

असह्यवेगः सशरश्च वेगवान्
चकर्त्त राहोः सकिरीटमुच्छिरः।
अपातयद्यत्र च शाल्वशुक्रयो
र्मिथो जयार्थं प्रसृतं विचारणम्।।45।।

प्रकर्तितं राहुशिरः समापतद्
यदा च शाल्वस्य पुरः कवेस्तथा।
विमूर्च्छितः क्रोधभरेण चेतसा
विचेतनः सन् क्षणमानिनाय सः।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स जामदग्न्येन निपातितो युधि
व्यपेतकोपः सुरतापनोऽवदत्।।
प्रभो! न वैरं प्रभविष्णुना शुभम्
स्वमोहतोऽहं गतवानिमां दशाम्।। 47।।

मृतोऽपि रक्षः भृगुवंशनन्दनं
ननाम चानर्च मुदा गतस्मयः।
तदा स रामेण च नन्दितोऽसुरः
बभौ च राहुर्ग्रहमण्डलस्थितः।। 48।।

हतोऽपि रामेण बभौ ग्रहश्च यः
विलोक्य शाल्वो मरणाय निश्चयम्।
चकार सैन्येन सहाशु निर्ययौ
शिवं च योद्धुं तरसा हिमालयम्।। 49।।

यदा च शाल्वो ह्यकृतव्रणाननाद्
स्वबन्धुनाशाय शिवेन भार्गवः।
विसर्जितोऽविन्दत कोपनिर्भरः
तदा विजेतुं च शिवं मनो दधे।। 50।।

इत्थं च शाल्वनृपतिर्गिरिशं विजेतुं
कृत्वा मतिं गिरिपतिं प्रति यातुकामः।
दीपद्युतिं ननु विलोक्य रुषा पतङ्गाः
नाशाय वेग सहिता निपतन्ति नूनम्।। 51।।

**।। इति त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये रामपराक्रमो नाम त्रयोदशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# चतुर्दशः सर्गः

सपदि राहुशिरः प्रविगृह्य यः
परशुरामशरः गतवान् रणे।
स पुनरेत्य निषंगगतो यदा
मुनिरथाह्वयदाश्वकृतव्रणम्।।1।।

व्रज च शाल्वनृपं कुरु दूततां
कथय तद्धितमेव च वृत्तकम्।
समवगच्छति चेद्वचनैः प्रियं
स खलु राहुगतिं न गमिष्यति।।2।।

इति निशम्य च शाल्वनृपं गतः
नयविदाह वचो ह्यकृतव्रणः।
श्रृणु विवास्य च वासवमोकसः
दिवि करोषि च राज्यमहो ! निजम्।।3।।

सुरगणाः प्रहिताः सुरलोकतो
भुवमरण्यमथाद्रिषु संभ्रमन्।
तरुषु निर्झरिणीषु दरीषु ते
भ्रमिपराः समयं च नयन्त्यहो।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परधनं परवासमवाप्य ये
प्रमुदिताः परयोषिति सस्पृहाः।
परसुखानधिकृत्य सदा रताः
न सुखिनश्च कदापि भवन्ति ते।।5।।

अनयमार्गरताश्च कुशीलिनो
विनयवर्जितवृत्ति विचक्षणाः।
अपनयन्ति सतां चरितान्यलं
दिवि नयन्ति च कालमथासुराः।।6।।

वदति चात्र शिवेन विसर्जितः
परशुराममुनिर्भृगुवंशजः।
फलमवाप्नुहि घोरमिदं रणे
रणनिमंत्रणमेव च वेत्थ वा।।7।।

इति निशम्य च दूतगिरं रुषा
कटुवचा क्वणनं कुरुतेऽसुरः।
अपलपत्यरिरेष रुषाऽचलद्
चलतनुश्च चचाल सहानुगः।।8।।

द्रुतमसौ परिधावति भीषणम्
किमहमद्य करोमि नवेद्मयलम्।
सपदि सैन्यबलं प्रहिणोद् क्रुधा
हिमवतः शिखरं शिवपर्वतम्।।9।।

स चतुरंगबलेन जयैषिणा
सपदि शाल्वनृपो व्यचलद् गृहात्।
युधि विजेतुमसौ भवशूलिना
कृतमथान्तकरेण च संगरम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शिवविरोधमतिः क्षयमायुषो
विभवभोगरतिः पतनस्थितिः।
न गणयत्यमरैः समरे मृतिम्
परिवहन् मरणाय भवत्यलम्।। 11।।

पशुपतिं गिरिजापतिमीश्वरम्
प्रणतकामपतिं भजतां पतिम्।
निखिलविघ्नपतिं च सतां पतिम्
क्व सुखमेति विरुध्य शिवापतिम्।। 12।।

शिवविरोधधिया सजवः कुधीः
भृगुकुलस्य मुनिं शिवरक्षितम्।
परशुराममभिप्रहितायुधः
झटिति शाल्वनृपो जयमिच्छति।। 13।।

परशुराम उदीक्ष्य जवेन तं
समभिगम्य च योद्धुमलं रिपुम्।
बहुशरैर्मुसलैरसिभिस्तथा
परशुना च कृतो नवसंगरः।। 14।।

असुरसैन्यकृतं विविधायुधैः
प्रहरणं च गदाभिरयोगुडैः।।
परशुकृत्तमभूदथ पट्टिशैः
खलु भुशुण्डिकृताचरणं तथा।। 15।।

परशुना वशिना मुनिना रणे,
वहुविधायुधमाशु विकर्तितम्।
विविधशास्त्र विघातन चातुरीम्
रिपुकृतां व्यनशद् युधि भार्गवः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स युयुधे विविधैरसुरोद्भटैः
प्रहितशस्त्रगणैरपराजितः।
परिचचाल गिरिर्न यथानिलैः
परशुना शुशुभे न च विव्यथे।।17।।

परशुना हरिणश्च यथा तथा
परशुना रिपवः परिकर्तिताः।।
विजयिना बलिना च मदोद्धताः
दनुभवा धरणीमभिशेरते।।18।।

अहमहं विचिकीर्षितमन्वहं
परिदधन्त उपेत्य मृधेऽसुराः।
मुमुहुरिद्धमदाश्च रणोद्यताः
प्रहरणैश्च मृताः स्वपरश्वधैः।।19।।

सुरगणाः परिलक्ष्य तदाऽनयोः
बहुभिरेक कृते युधि संगरम्।
न च बभौ रणमीदृशमुद्धतम्
जगदुरम्बरगा रणपण्डिताः।।20।।

समधिरुह्य गजं तरसाऽसुरः
सपदि शाल्व इयेष च भार्गवम्।
युधि विजेतुमचिक्षिपदस्त्रकान्
न च दुनोति तथापि स भार्गवः।।21।।

प्रहृतमस्त्रगणं निखिलं तदा
परिगतो जमदग्निसुतो बली।
परशुना विचकर्त्त गतव्यथः
तदनु शाल्वशिरो विजहार सः।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुकुट मण्डित मुण्डमभूत्पृथक्
गिरिसमस्य च शाल्वतनोस्तदा।
असुरभूषण एव निपातितो
दिविषदां रिपवो युधि दुद्रुवुः।।23।।

सपरशुं प्रविलोक्य च भार्गवम्,
हतबलाः सबला रजनीचराः।।
प्रविविशुः स्वपुरं वरुणालयम्
दिवमकण्टकमाशु बभौ तदा।।24।।

सुरपतिर्मुमुदे च सुरैः सह
स्वपुरमेत्य दधे निजशासनम्।
विजयतो जमदग्निसुतस्य ते
विनिहता दितिजाश्च पलायिताः।।25।।

भृगुसुतं त्वरया रणभूमिगं
नवरथेन च सिंहयुतेन तम्।
अनयदात्मगिरिं प्रति शंकरः
न्यवसदद्रिशिरोमणिमस्तके।।26।।

मुमुदिरे च सुराः सशतक्रतुः
सुरनिवासपुरं गतकण्टकम्।
सदसि देवगणान्समुपस्थितान्
गिरमुवाच विलोक्य दिवस्पतिः।।27।।

श्रृणुत! देव–सभा–धृत विग्रहाः,
पशुपतेः प्रहितो जमदग्निजः।
परशुराममुनिर्दनुजान्तकः
युधि बभौ नः शत्रुजशोकहृत्।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रणतिभिः स्तुतिभिर्मतिभिर्मुदा
कुसुमवृष्टिभिरिष्टविलोकनैः।
परशुराममुनेरभिनन्दनम्
शिवपुरे कुरुतेति समाहिताः।। 29।।

पणव–दुन्दुभि–गोमुखनिःस्वनम्
दिवि बभूव सुरा जहृषुस्तदा।
कुसुमवृष्टिरभूच्च शिवालये
परशुराममुनेरभिनन्दने।। 30।।

जयकराः शिववन्दन तत्पराः
सुरहिताचरणेन कृतादराः।
गिरिपतिं भृगुजं च हि तुष्टुवुः
ननृतुरिष्टसुखेन जगुः सुराः।। 31।।

अथ विलोक्य शिवोऽपि समर्थताम्
रिपुविनाशनकर्मणि वीरताम्।
परशुराममुवाच शुभां गिरम्
अहमलं भवता परितोषितः।। 32।।

तव कुलेऽमृतवर्षणतत्परा
मम कृपारसवृष्टिवहा मृतान्।
समुपजीवयितुं भृगुतः स्थिता
तदपि दित्सुरहं विविधागमान्।। 33।।

निखिलशस्त्रसमूहमथाद्य ते
परिददामि सहस्रसहस्रकम्।
मम कृपा वशतस्तव पार्श्वगाः
स्ववशगा भवितार इमे पुरः।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वहुविधायुधसंहृतिविद्यया
सविनियोगरहस्यविधादिना।
परशुराममुनिः शुशुभे तदा
शिवकृपात्तमतिर्विजहार तान्।।35।।

रथमवाप सिताश्वयुतं शिवाद्
अहतवेगमनन्तशुभध्वजम्।
इषुधिमक्षयबाणधरं तथा
परशुराममुनिर्जगृहे मुदा।।36।।

निखिलशस्त्रसहं कवचं दृढ़म्
विजयदञ्च दृढ़ज्यमभेद्यकम्।
अजरमैशधनुश्च महाधनम्
भृगुसुताय ददौ गिरिशस्तदा।।37।।

भुवि भविष्यति शौर्यमजेयता
युधि तथाऽप्रतिमं चिरजीवनम्।
निजकृताऽसुविधारण योग्यता
भवतु शंभुकृपाऽमृतभूषिता।।38।।

सकललोकगतिर्भुवने यशः
भृगुपतेरथ मन्त्रदशक्तिजा।
भवतु कीर्तिरशेषतपोफलम्
गिरिपतिः प्रददौ मुनयेऽखिलम्।।39।।

एवं प्रतोष्य शिवमायुधजाश्च विद्याः
शंभोरवाप जमदग्निसुतो गिरीशाद्।
विद्यागुरोरपि कृपा भवतीह यस्मिन्
विद्याद्यिपः कथमसौ भुवि नैव भूयाद्।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शौर्यं पराक्रममजेयमथाधिगम्य
पुण्यं तथैव तपसस्तपसा शिवेन।
प्रीत्या द्विजः परशुराममुनी रराज
मृत्युंजयत्वमपि शंभुमतिः स लेभे।।41।।

**।। इति त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये रामविद्यागमो नाम चतुर्दशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# पञ्चदशः सर्गः

विद्या उपास्य पितरावभिवीक्षणार्थम्
विद्यागुरोरनुमतः समुपेत्य वासम्।
पादौ तयोर्भृशमवन्दत जामदग्न्यः
आश्लिष्य नेत्रसलिलैरभिषिञ्चतां तौ।।1।।

माता च रेणुतनया तनयं नयज्ञं
विद्यावदातमतिमाहितबोधमुत्कम्।
स्नेहाञ्चिता च मुमुदेऽथ सतां वरिष्ठम्
सम्प्राप्य कान्तिभरिताचरणैर्ललास।।2।।

याता कदाचिदृतुकालसमाप्तिकाले
स्रग्धारिणी त्रिपथगामभिषेकबुद्धया।
स्नात्वा पतिं च जमदग्निमुनिं विदध्यौ
दिव्याम्बराणि परिधाय विभूषिताऽभूत्।।3।।

गंगा जले जलविहाररतं प्रसन्नं
नारीभिरावृतममुं प्रविलासिनीभिः।
क्रीडोद्यतं सपदि चित्ररथं विलोक्य
दध्यौ पतिं पतिरताऽपि पतिव्रता सा।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रेमान्विताः प्रणयतः प्रमदाश्च बालाः
काश्चित्प्रलिप्तनवकुंकुमचन्दनाङग्यः।
गायन्त्य आशु परिरभ्य बलाद् प्रियं तम्
कर्पूर–चन्दन जलैरभितःसिषिञ्चुः।।5।।

वीणा'निनादनपराः सितहारकण्ठ्यः
दिव्योत्सवे सुललना ननृतुस्तदग्रे।
प्रेम्णा प्रहीणवसना मदिरेक्षणास्ताः
चन्द्रानना जलविहारपरायणाश्च।।6।।

तं चित्रचारुवदनं पतिमासिषिञ्चुः
सद्गन्धचन्दनविमिश्रजलैः समन्तात्।
नीवीस्तनालभननर्मनखाग्रवृत्या
प्रीताः स्मरार्चनरता ललनाः परीताः।।7।।

वीणा मृदंग–सुर दुन्दुभिभूषणानां
घोषः कलं दिशि दिशि प्रसृतस्तदानीम्।
रम्याणि वीक्ष्य मधुराणि विलोक्य चाराद्
नोत्कण्ठितं भवति कस्य जनस्य चेतः।।8।।

ध्यात्वा पतिं हृदि तपोव्रतबोधमूर्ति
एवं मुनिर्यदि भवेन्मुदिता भवेयम्।
मुग्धा विलोक्य नवचित्रविलासलीलाम्
प्राप्ताऽऽश्रमं मुनिवरस्य च रेणुकन्या।।9।।

तां मंगलां पतिरतामपि वीक्षमाणाम्
दृष्ट्वा प्रियां प्रमुदिताञ्च कृताभिषेकाम्।
सद्यः प्रणामकरणे निरतां सुशीलाम्
द्वारे स्थितां प्रति चुकोप भृशं मुनीन्द्रः।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुस्तकालय 180675 गुरुकुल कांगड़ी विश्वविद्यालय

पत्नीं प्रियामपि रुषा महताऽनुविष्टो
कालाग्निकान्ति–सदृशोऽरुणवीक्षणोऽभूत्।
क्रोधादुवाच जमदग्निरतीतबोधः
क्रोधे विवेकमतिराशु कथं भवित्री।।

पुण्याग्निहोत्रसमयोऽस्त्यधुना व्यतीतो
मोघं बभौ मम सुरातिथिपूजनञ्च।
येनाद्य चित्ररथ–चित्र–विलासलीलाम्
द्रष्टुं रता त्वमभवः सवनस्य काले।। 12।।

त्वं कामकेलिपरिणामकलाप्रवाहे
स्नात्वाऽऽगता सुरधुनी–सलिले न सम्यक्।
जानासि नूनमधुना व्यभिचारिणी त्वम्
धर्मेण नार्हसि यतो गृहिणी न मेऽसि।। 13।।

भर्तुर्निशम्य वचनानि पतिव्रताऽपि
भीता शनैर्मधुरया च गिरा तमूचे।
भो ! प्राणवल्लभ! मुनीश्वर ! मे पतिस्त्वम्
नान्यं कदापि मनसाऽपि विचिन्तयामि।। 14।।

त्वामेव चिन्तनरता हृदये भवामि
नान्यं जनं मनसि धारयितुं समीहे।
वाञ्छाम्यलं प्रभवतां भवतां प्रसादम्
पत्युः सुखे भवति सर्वसुखं बधूनाम्।। 15।।

नारायणो मम सुतः प्रसुतो विधिश्च
ह्यन्ये भवन्ति सुतरामिह मे प्रपौत्राः।
कस्माद् भवेदपि ममाभिरतिर्जनेऽन्ये
नाहं विहाय पतिमन्यजनं भजामि।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मान्यो गुरुर्मम पतिः परमश्च धर्मः
श्लाध्यः सदा सुखकरः पतिरेव लोके।
प्राणा भवन्ति स्वपतौ सततं प्रलीनाः
स्त्रीणां पतिर्भवति सर्वसुखाय सद्यः।। 17।।

त्वं मे व्रतस्य फलमेव गतिस्त्वमेव
कर्मापि मे त्वमसि सद्गुरुरेव भर्ता।।
धर्मः सदा पतिरलं भृगुनन्दनस्त्वम्
न त्वां विहाय भुवनेऽन्यमहं भजामि।। 18।।

त्वं मे तपस्त्वमसि मे जप एव पूजा
दैनन्दिनी त्वमसि शान्तिरथासि कान्तिः।
त्वामेव देव! भुवने नृषु चिन्तयामि
सत्यं वदामि मम पूज्यपतिस्त्वमेकः।। 19।।

क्रुद्धे त्वयि क्व मयि शान्तिरपीच्छिता स्याद्
प्रीते त्वयि क्व मयि वृत्तिरनिच्छिता स्याद्।
मोहात्परेष्वभिरतिर्न च मेऽस्ति सत्यम्
ज्ञात्वा यथेच्छसि गुरो ! कुरु धर्मतस्त्वम्।। 20।।

शंका यदा भवति दम्पतिजा मिथश्च
सञ्जीवनं भवति नैव गृहं तदीयम्।
स्त्रीणां चरित्रविषये विमतिर्यदा स्याद्
मन्ये मृतिर्वरमिहास्ति च जीवनेन।। 21।।

धिक् तां स्त्रियं पतिरथो विमुखश्च यस्याः
धिक् जीवनं पतिविरोधसमन्वितञ्च।
धिक् तां विहाय पतिमन्यजनानुरक्ताम्
धिक् शंकते पतिरहो गृहिणीं स्वकीयाम्।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सत्यं निशम्य वचनं न मुनिश्च मेने
मत्वा प्रजल्पनमिवाथ स रेणुकायै।
भूयश्चुकोप जमदग्निमुनिस्तपस्वी
कोपे मतिश्च विहता भवतीति लोके।।23।।

जातो विलम्बकरणादथकर्मलोपः
प्रातः कृता न विहिता सदुपासनाऽपि।
नाग्नौ कृताऽहुतिरपीष्टविधिश्च छिन्नः
पत्न्या कृतो मुनिरमन्यत चाथ रुष्टः।।24।।

ऊचे विगर्हितमनाचरितं त्वयाऽद्य
हे ! रेणुके ! त्वमसि मे सुतरां वधार्हा।
नार्य्या सती त्वमसि मामनृतं ब्रवीषि
कुर्वेऽनुशासनमहं तव मृत्युरूपम्।।25।।

कोपान्मुनिः पतिरताञ्च पतिव्रताञ्च
हन्तुं दधे मनसि पुत्रपरीक्षणञ्च।
पुत्रान् समादिशदसौ जननीवधार्थम्
ते नाभ्यनन्दनशुभां जनकस्य चाज्ञाम्।।26।।

मातुर्वधान्निववृतेऽथ यदा रुमण्वान्
भ्राता सुषेणसहितश्च तदा मुनीन्द्रः।
विश्वावसुं वसुमथादिशदाशु मातु
र्मृत्युं विधातुमपि तैर्न कृतन्तथापि।।27।।

ऊचे वसुः प्रणतिभिः पितरं प्रसाद्य
हे तात ! ते वचनमिष्टमहं न कुर्याम्।
दुष्कर्म लोक विपरीतमधर्म्यमस्ति
ह्यस्वर्ग्यमाशु नरकस्य गतिं ददाति।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



माता प्रिया भवति तीर्थमशेषमुक्त्यै
भुक्त्यै फलाय जनकोऽपि तथैव लोके।
या यत्नतः स्वतनयं नवमासकालं
गर्भे वहत्यविरतं नहि सा वधार्हा।। 29।।

पीत्वा पयोऽमृतसमं भुवने च यस्याः
पुष्टो भवत्यनुदिनं विजयी च तुंगः।
स्नेहाब्धिपूर सलिलस्नपनानुरक्ता
या तां निहत्य तनयश्च भवेत्कृतघ्नः।। 30।।

या मां प्रपोषितवती पयसाऽपि नित्यम्
या शैशवान्मयि सदा शुभवत्सलाऽभूद्।
याऽदात्पितुः परिचयस्तव हे तपस्विन् !
वन्द्या हि सा मम कथं जननी वधार्हा।। 31।।

मातुः शरीरमधिगम्य सुबोधमाद्यं
संस्कारमिष्टमपि भूरि यशः समृद्धिम्।
लब्ध्वा यतः प्रमुदितस्तनयोऽस्ति लोके
तां हंतुमिच्छति सुतो नरकानुगामी।। 32।।

मान्यो सुतस्य जनको भुवि पूजनीयः
सदैवतं तदनुशासनमस्ति पाल्यम्।
वाक्यानुपालनतयाऽपि च पिण्डदानाद्
प्रत्यब्दभोजनतया तनयत्वमेति।। 33।।

नाहं स्वमातृहनने प्रभवामि लोके
पूज्या सदैव जननी जनकस्तथैव।
या जन्मदा मम निहत्य कथं सुशीलां
देवीं भवामि भुवने वसितुं समर्थः।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रुत्वा सुतोक्तिमभितः कुपितो मुनीशः
शप्त्वा सुतं भुवमपातयदुग्रतेजः।
उत्थाय तूर्णमयमाशु वसुं वरिष्ठं
आज्ञावमानफलमेव ददौ जितारिः।। 35।।

विश्वावसुं स्वतनयं जमदग्निदेव
आहूय मातृहननाय समादिदेश।।
शस्त्रेण घातयितुमेव पुरः स्थितोऽभूद्
पुत्रो मुमोह वचनानि निशम्य तूष्णीम्।। 36।।

हे तात ! ते चरणयोः प्रणिपत्य याचे
मां मा प्रदेहि वचनं जननीं निहन्तुम्।
माता गुरुर्भवति चाभ्यधिको गुरुभ्यो
सा गौरवेण पितुरभ्यधिकाऽस्ति लोके।। 37।।

प्रासूय या तदनु पालनपोषणाद्यैः
सम्वर्द्धनेऽनिशमभून्निरता दयालुः।
हत्वा च तां स्वजननीं जननप्रदात्रीं
जाने न तात कतमां गतिमभ्युपैमि।। 38।।

संपालयामि भवतामखिलान् निदेशान्
नाहं कदापि जननीहनने समर्थः।
नाहं भवामि भुवने निजमातृहन्ता
हे देव! मामनयवर्त्मगतं क्षमस्व।। 39।।

वाक्यं निशम्य करुणाभरितं सुतस्य
क्रोधेन कम्पिततनुर्निजगाद तीक्ष्णम्।
रे! मूढ! मां वदसि धर्ममधर्मबोध
स्त्वं पितृनिन्दक! उपेत्य न मां प्रशाधि।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वज्राहतं गिरिमिवाशु सुतं स्वकीयं
विश्वावसुं भृशमपातयदेव शप्त्वा।
क्रोधोल्बणेन गतबुद्धिरसौ मुनीशः
पुत्रौ स्वमातृहननाद्विरतौ जघान।।41।।

लोके विरक्तमतयो मुनयोऽपि मोहाद्
कोपाच्च नष्टमतयोऽपि कदाचरन्ति।
कोपं विजित्य तपसा जमदग्निदेवो
जातः कथं घृणितकोपपराजितोऽयम्।।42।।

आहूय मध्यमसुतं खलु नष्टसंज्ञो
आज्ञापयज्जननिमारण कर्म हेतोः।
धर्मज्ञ! पुत्र! त्वमसि प्रगुणैर्वरिष्ठो
भक्तः पितुस्त्वमसि सम्प्रति सत्यसन्धः।।43।।

लोके पिताऽहमिह तेऽवशि माननीयः
पूज्यो गुरुर्मम निदेशमलं करोतु।
शस्त्रेण घातय पुरो व्यभिचारलीनाम्
रेणोः सुतां सपदि मे शमय प्रकोपम्।।44।।

आज्ञां निशम्य पितुरेष विमूढ़चेता
दृष्ट्वा मृतौ च पतितौ च सहोदरौ द्वौ।
धर्मान्मनागपि चचाल न जामदग्न्यो
विज्ञाय क्रुद्धपितरं निजगाद नम्रः।।45।।

यस्याः पदाब्जयुगलं सततं स्मरन्ति
ध्यायन्ति योगनिरताश्च सुपूजयन्ति।
तां मातरं प्रणतपालनतत्परां वै
पापप्रणाशनिपुणां कथमद्य हन्मि।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वन्द्या सदा शुभकरी जननी मदीया
मान्या महा मदहरी महनीयमूर्तिः।
सन्दर्शनान्निखिलपापविनाशशीला
नार्हा वधाय गुरुदेव! हि रेणुकाम्बा।।47।।

यत्संश्रयादखिलपुण्यगुणानुभूति
र्यद्दर्शनादशुभ भाव विनाश भीतिः।
यद्वन्दनादवाशि पूर्ण पतिव्रतात्वम्
लोके कथं भवति मे जननी वधार्हा।।48।।

यस्याः कृपाभरितवत्सलभावतोऽयम्
पुत्रोऽभवज्जगति सद्गति शीलताऽपि।
हस्तौ चुचुम्ब शिशुतोऽपि हिताय लीना
तां मातरं कथमहं लतया निहन्मि।।49।।

त्वं मे पिता जनिकरो नभसो विशालः
माताऽपि सा क्षितितलादधिका विशाला।
वन्द्यो गुरुस्त्वमसि मे वचने रतोऽस्मि
नाहं पितुर्वचनतो जननीं निहन्मि।।50।।

क्रोधादृषिस्तमपि रेणुसुतापुरस्ताद्
पुत्रं न्यपातयदलं पृथिवीतलेऽसौ।
तुर्यं सुतं पुनरभाषत घातनार्थं
भो पुत्र! रेणुतनयां जहि मे पुरःस्थाम्।।51।।

द्रष्टुं कदाऽप्यहमिमां प्रभवामि नैवम्
कृत्वा कदाचरणमत्र कथं स्थितेयम्।
आज्ञास्ति मे तव पितुर्हननाय पुत्र!
शीघ्रं विघातय पुरो मम रेणुकन्याम्।।52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्थं निशम्य जनकस्य वचांसि तत्र
क्रोधम्पृणस्य मनसाऽपि दधार नो सः।
भ्रातृन् हतानपि विलोक्य गतिं स्वकीयां
सञ्चिन्त्य नापि मनसा विभयाञ्चकार।। 53।।

देवैर्मुनीन्द्रनिचयैरपि यस्य नित्यम्
घृष्टं पदाब्जयुगलं शिरसा प्रणामे।
नित्यं विधिर्हृदि दधाति च यस्य मूर्तिम्
साम्बा कथं भवति मे भुवने वधार्हा।। 54।।

व्रह्माऽपि चिन्तनरतो नहि वेदविद्याम्
तां रेणुकां सकलबोधवहां सवित्रीम्।
जानाति सम्यगमृतां जननीं मदीयाम्
तां हन्तुमद्य ललितां प्रभवामि नाहम्।। 55।।

देवी सदा बुध जनैरभिवन्दनीया
ध्येया रमेव भुवि योगिजनैरनिन्द्या।
ज्ञेयाऽवधानमतिभिर्हृदये सदा या
सा सर्वभूतहितदाऽपि कथं वधार्हा।। 56।।

त्यक्ष्यामि देहमिममाशु न संशयोऽत्र
देवीं स्वमातरमिमां न तु घातयामि।
वह्नौ विशामि जलधौ च पतामि चोर्ध्वाद्
तिग्मं पिबामि च विषं जननीं न हन्मि।। 57।।

सद्यो न्यपातयदमुं तनयं च शप्त्वा
श्रुत्वा 'न हन्मि' वचनं भृगुवंशजन्मा।।
हा! हा! कृतं मुनिवरैश्च सुरैर्मुनेस्तत्
क्रोधं विलोक्य चरितं सभयाश्च सर्वे।। 58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्थं विनाश्य तनयान् चतुरश्च कोपाद्
पत्नीं विघातुमपि नोत्सहते तदानीम्।
सुप्तान् मृताननु विलोक्य च रेणुकन्यां
सम्मूर्च्छितश्च जमदग्निमुनिश्चकम्पे।। 59।।

विपदि यस्य भवेत्स्वजनस्मृतिः
परकृतापदि तस्य सुतस्मृतिः।
परशुराममचिन्तयदात्मजम्
वधकृते जमदग्निमुनिर्वने।। 60।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये जमदग्निकोपो नाम पञ्चदशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# षोडशः सर्गः

मुनिसुता निहता न च रेणुका
कुपितवृत्तिरतीव विवर्द्धिता।
समवलोक्य सुरा मुनयोऽपरे
नतिपराः प्रबभूवुरलं प्रभुम्।।1।।

हृदि दधे जगदीश्वरमुद्विजन्
न शमितो मुनिकोपहुताशनः।
परशुराममनुस्मरणे रतः
त्रिभिरुवाच च राममयं मुनिः।।2।।

वदति राम इति त्रिदिवैर्नुते
पितरि संस्मरणेन समाययौ।
परशुराममुनिर्वनतो गृहं
प्रणतिभिः पितरं परिषस्वजे।।3।।

जनकपादयुगं प्रणनाम सः
मधुरयाऽऽह गिरा पितरं सुतः।
त्वमसि मे शिवतुल्यगुरुर्भुवि
न सदृशः क्वचिदस्ति जगत्त्रये।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वमसि मे जनको भुवि विश्रुतः
विधि हरीश्वरपावकचन्द्रमाः।
प्रणव–सत्यविभुत्रिदशास्त्वयि
वपुषि ते निवसन्त्यखिलाःसुराः।।5।।

कथमलंध्यधिया स्मरणं त्वया
मम कृतं सदिहागमनाय भो!!
तव पुरो विनतोऽस्ति तवात्मजः
सपदि मामनुशाधि यथारुचि।।6।।

न कुरुते पितुरिष्टवचांसि यो
न मनुते वचनं पितुरेव यो।
भवति नैव शुभा गतिरिच्छिता
जगति तस्य सुतस्य न शं तथा।।7।।

तव वशंवदताऽस्ति जगद्गुरो
मयि च ते वचनानि सुमन्त्रवद्।
दिशतु मां करवाणि किमद्य ते
नवनियोगमलं भुवि चिन्तया।।8।।

सुरपुरेऽपि भवेद्धि रसातले
धरणिमण्डलगे नभसि स्थितः।
क्वचिदसाध्यगतिर्न च मेऽस्ति चेद्
वदतु तर्हि शुभं करवाणि किम्।।9।।

त्रिभुवनेऽप्यथवा रविमण्डले
यदि भवेच्छशिनि प्रलयाब्धिगे।
दनुजलोकगते गहने वने
भवतु पालयिताऽस्म्यनुशासनम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रमुदितोऽथ निशम्य गिरं दृढ़ाम्
परशुरामकृतां जमदग्निकः।
बहु जहर्ष च हृष्टतनूरुहः
प्रियमवोचदनिष्टवचस्तदा।। 11।।

त्रिभुवनस्य पतिर्हरिरच्युतो
मम सखा त्वमभूश्च पुरा प्रभो।
त्वमिह मे तनयोऽद्य पुरःस्थितो
न भुवने क्वचिदस्ति जगत्पिता।। 12।।

विनिहताश्चतुरश्च सहोदराः
त्वमसि पुत्रतया भुवने मम।
सुकरणानि शरीरमिदं मम
न हि च जीवनमत्र बिना त्वया।। 13।।

यदि करिष्यसि नो वचनं मम
कथमहं भवितास्मि सुपुत्रवान्।
मम सुता निजमातृवशंगता
न वचनं परिपालयितुं रताः।। 14।।

भृगुकुलं कथमद्य भविष्यति
मम च जीवनधारणमन्यथा।
भुवि भवेत्कुलभूषणताऽन्वये
यदि निदेशरतिस्त्वयि मे भवेत्।। 15।।

श्रृणु यया नवमासधृतः पुरा
त्वमसि तां जननीं च ममाज्ञया।।
सुत! विघातय चेद्धितचिन्तकः
स्वजनकस्य भवेदथवा मृतिः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्मरतनुर्भुवि चित्ररथोऽनया
त्रिपथगाम्बुविलासरतो भृशम्।
हृदि गतोऽपि चिरं प्रविलोकितः
न वचनं मम सम्प्रति चान्यथा।। 17।।

उषसि नित्यसुरातिथिपूजनम्
न पितरश्च तदा मम तर्पिताः।
द्विजविधिश्च गृहे परिलोपितः
स्मरविलासविलोकनतोऽनया।। 18।।

पतिरहं विजहामि च रेणुकाम्
न गतिरत्र भवेच्च पतिं बिना।
मृतिरतोऽस्ति वराय ममाज्ञया,
सुत! विघातय रेणुसुतां क्षणाद्।। 19।।

पितुरुदीर्णवंचांसि दधे हृदि
ध्वनिरभूद् वितते क्षितिमण्डले।
स्वजननीचरणान्तिकमास्तृतान्
समवलोकयदेष सहोदरान्।। 20।।

कुलविनाशकरं वचनं मुधा
पितुरिदं क्रियते यदि साम्प्रतम्।
कुलविलोपनमद्य भवेद् ध्रुवम्
वचनपालनमेव भवेच्च नो।। 21।।

समुचितानुचितं न विचार्य सः
परशुनाऽशु शितेन च मातरम्।
भृगुसुतोऽच्छिनदेव च रेणुकाम्
भुवि पपात शुभा कदलीव सा।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ववृषुरेव सुराः कुसुमोच्चयान्
ननृतुरस्य पितुः करणान्यलम्।
जगदुरेव जयत्वनिशं जनाः
पपरुरस्य मुनेरथ भावनाः।। 23।।

निखिलधर्मभृतां वरमात्मजम्
समवलोक्य पिता प्रसंशस तम्।
जनकभक्तिरथास्त्यतुला दृढा
परशुराममुनौ च पितुः कृपा।। 24।।

अकथयज्जमदग्निमुनिः सुतम्
त्वमसि वंशविवर्द्धक एव नः।
वरय तुष्ट इहास्मि मनोरथम्
किमपि नास्ति तवाद्य सुदुर्लभः।। 25।।

त्वमसि सत्यरतो गुरुभक्तिमान्
त्वमसि देवगणैरभिवाञ्छितः।
मनसि तेऽस्ति यदद्य वदस्व माम्
परिददाम्यखिलं विजितस्त्वया।। 26।।

जगति यस्य तुतोष पिताऽविता
हृदि दधाति पितुर्वचनं च यः।
करगतं पुरुषार्थचतुष्टयम्
भवति तस्य सुतस्य यशस्विता।। 27।।

परिनिशम्य पितुर्वचनं तदा
परशुराममुनिर्मतिमण्डितः।
वरमयाचत वंशहिते रतः
जनकभक्तिपरायणबुद्धिभृत्।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्ववधबोधविवर्जितमानसा
विनिहता जननी च सहोदराः।
अनघ! भस्मशरीरभृतो इमे
सपदि जीवितमेव वहन्त्वलम्।।29।।

न मम पापरताश्च सहोदरा
न हि च रेणुसुता व्यभिचारिणी।
तदपि ते वचनं परिपालयन्
विनिहता ह्यनघा जननी मया।।30।।

मुनिगणा ऋषयोऽपि सुयोगिनो
मम च मातुरलं गुरुभक्तितः।
चरणयुग्ममथार्चनतत्पराः
बत! जगज्जननी निहता मया।।31।।

मयि च मातृवधोऽपि भयंकरो
न हि भवेद्धि यथा क्रियतां गुरो!।
न च विबोधतु सा निहता मया
समुपजीवय तां जगदम्बिकाम्।।32।।

परशुना निहतामपि रेणुकाम्
मुनिरजीवयदाशु च पुत्रकान्।
परशुरामवरेण विबोधिता
ह्यमृतसिञ्चनतो जमदग्निना।।33।।

मुनिरुवाच विलोक्य च रेणुकाम्
प्रियतमे! त्यज दुःखमहर्निशम्।
यदनुभूतमिदं त्यज दीनताम्
यदपि कोपवशेन कृतम् मया।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वमसि रेणुसुता च पतिव्रता
भुवि जगज्जननी सुरवंदिता।
त्वमसि सर्वहिताचरणेश्वरी
मम च्र कोपकृतं परिमर्षय।। 35।।

शिवकृपाभरितोऽथ च रेणुकः
परितुतोष यदा तपसा शिवम्।
सुरनदीतटयज्ञमकारयत्
सुतनयां समयाचत तं तदा।। 36।।

हवनकुण्डगतामथ कन्यकाम्
समवलोक्य पिता मुमुदे मखे।।
भृशमपूपुजदङ्कगतां शुभाम्
त्वमसि सैव सुरासुरवन्दिता।। 37।।

त्वमसि देवि हुताशनसंभवा,
त्वमसि यज्ञफलान्वितरूपिणी।
त्वमसि रेणुकपुण्यफलार्जिता
त्वमसि मेऽन्वयवृद्धिकरी शुभा।। 38।।

सकललक्षणलक्ष्मविहारिणी
निखिलदेवगणाननजाऽमृता।
कलिमलौघविनाशकरी शिवा
जयतु रेणुसुता चिदयोनिजा।। 39।।

पितुरभूद् विशदा सुमतिः श्रिता
ह्यजनि मातरि दम्पतिजा रतिः।
पतिरतिः सफलाऽभवदुल्बणा
परशुरामपरीक्षणसत्फलाद्।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पितुरवाप्य पुनर्नवजीवनम्
पुलकिता निहताश्च सहोदराः।
न जननीरतिरत्र विखण्डिता
जनकभक्तिरथापि सुरक्षिता।। 41।।

पतिमवाप्य पुनश्च पतिव्रता
शुभफला पतिभक्तिरखण्डिता।
समभवन्मुदिता किल रेणुका
परशुरामकृतं कुलरक्षणम्।। 42।।

मुमुदिरे जमदग्निसुता मिथः
शुशुभिरेऽनुजसंगतयाऽपि ते।
रुरुचिरे भृगुजाः परिरेभिरे
परशुरामकृतेन दिदीपिरे।। 43।।

गतभयो न भयोद्वहने रतो
विगतकोपतया भृगुभूषणः।
भृशमकुप्यत कोपमुपालभन्
त्यज सदा मम देहमिमं क्षणाद्।। 44।।

बहु दुराचरितं मयि निर्घृण!
त्वमसि निर्दय! सर्वविनाशकृत्।
न च विवेकमतिस्त्वयि संस्थिते
शिशुवधं ललनावधमाचरः।। 45।।

त्वमसि भूतविहिंसनतत्परः
सह न भाषणमत्र वरं त्वया।।
स्पृशतु मां न कदापि दयां कुरु
व्रजतुमामपहाय यथेच्छसि।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुनिगणास्तव संगमतः सदा
गतयशाः सुधियोऽपि भवन्त्यलम्।
कथमहं निजवंशविलोपकं
तनुगतञ्च वहामि विरोधिनम्।।47।।

मुनिकृतामवलोक्य च तर्जनाम्
सपदि कोप उवाच भृगूद्वहम्।
श्रृणु न कोऽपि च कोपविवर्जितः
भवति देहधरो भुवनत्रये।।48।।

भवति लोकगतिर्न मया बिना
जगदिदं ध्रियते क्रियते मया।
मखतपोऽखिलदानविधावहम्
भुवि भवामि सदा भृगुनन्दन!।।49।।

परिनिशम्य मुनिः पुनरब्रवीत्
त्यज कलेवरमाशु नृशंस! मे।
व्रज सुदूरमितो न च मे रुचिः
त्वरय याहि तनोरथ दूरतः।।50।।

त्यजतु मां न मुने न च याम्यहम्
भुवि भविष्यति कार्यमतस्तव।।
ध्रुवमथाद्य विचिन्तय तत्वतः
सफलताऽपि न तेऽस्ति च मां बिना।।51।

सुरगणेषु तपस्विषु सन्नृषु
निखिलभूतगणेष्वहमास्थितः।
इति विचिन्त्य करोतु यथोचितम्
त्वमपि वाञ्छसि चेदथ याम्यहम्।।52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



व्रजत रे ! नवकोप ममाश्रमात्
झटिति मार्जनमद्य करोमि ते।
कुशजलेन पथोऽनिशमिच्छितम्
ह्यनुभवामि सुखं च बिना त्वया।। 53।।

एवं निशम्य जमदग्निमुनिं विहाय
क्रोधो ययौ परशुरामपितुर्निवासाद्।
शान्त्यै बभौ भृगुमुनेरयमाश्रमोऽपि
कोपं विजित्य जमदग्निमुनी रराज।। 54।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये जगदग्निचरितं नाम षोडशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सप्तदशः सर्गः

वसन् व्यतीयुर्दिवसाः क्रमेण
रामस्य पित्रोर्गृहमागतस्य।
पितामहान् द्रष्टुमियेष नत्वा
मनोगतं सः पितरौ जगाद।।1।।

लभ्येत चेन्मां भवतोरनुज्ञा
पितामहानस्मि मुदा दिदृक्षुः।
संदर्शनं वंशगुरोरमोघं
कृत्वा भविष्यामि च लब्धपुण्यः।।2।।

विज्ञाय भक्तिं कुलदेवतासु
पुत्रस्य हर्षाज्जमदग्निदेवः।
आज्ञापयत्पूर्वजपूजनार्थम्
ययौ च रामो मुदितस्ततश्च।।3।।

प्रशान्तवैरं च सतामुपास्यम्
रामो निवासं स्वपितामहस्य।
ऋचीकदेवस्य तपोवनं तं
विवेश शिष्यैर्मुनिभिः परीतम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुलक्षणैरन्वित सर्वगात्रो
गाम्भीर्यतश्शीलमतिर्विभाति।
बलीव बालोऽपि तपोभिरिद्धः
कोऽयं तपोराशिभिरेष दृष्टः।।5।।

पितामहं वीक्ष्य तपो निधानं
स्वनामगोत्रे मतिमानुवाच।
मूर्ध्ना च पादौ प्रणिपत्य हृष्टो
नमः कराभ्यामकरोत्तपस्वी।।6।।

पितामहश्चापि पितामही च
ननन्दतुः पौत्रमुखं निरीक्ष्य।
आशीर्भिराश्लिष्य च वत्सलेन
दृष्ट्याभिषेकं परिचक्रतुस्तौ।।7।।

अनामयौ ते पितरौ कथंचिद्
किं भ्रातरस्ते मुदिता वसन्ति।
पप्रच्छतुस्तौ कुशलं स्वपौत्रं
न्यवेदयत्सर्वकथां च रामः।।8।।

प्रश्नोत्तराभ्यामनुवादशैल्या
निदर्शनाबद्धसुबोधवाग्भिः।
ऋचीकदेवश्च सुतात्मजाय
निजाश्रमे साधु ददौ च विद्याः।।9।।

उवाच रामो बहुकालमेवम्
पितामहस्याश्रमतीर्थभूमौ।
संप्रीणयन् सच्चरितेन नित्यम्
प्रेम्णा च ताभ्यामथ दम्पतीभ्याम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लब्ध्वाशिषं चानुमतिं गतोऽभूद्
औौर्वाश्रमं तत्र मुनिं प्रणम्य।।
ततश्च रामश्च्यवनाय कृत्वा
नतिं सु–भक्त्या विजहर्ष नम्रः।।11।।

निर्धूमिताग्निप्रभया विभान्तम्
सुखावहं श्रोत्रमनोमतिभ्यः।
संनादितं भाति सुवेदघोषै
भृगोर्ययावाश्रममप्रमत्तः।।12।।

तपः प्रभावाद् भृगुपुंगवस्य
न दूयमाना निवसन्ति केऽपि।
खगा द्विजा वृक्षमृगाः समन्तात्
कूजन्ति गुंजन्ति लसन्ति भान्ति।।13।।

ददर्श दूरान्मुनिभिः परीतम्
शिष्यैर्वृतं स्वं प्रपितामहं तम्।
कुशासनस्थं न कुशासनस्थं
सुवेदिकामध्यगतो यथाग्निः।।14।।

आरण्यकानां निहितार्थतत्त्वम्
व्याख्यापयन्तं च मुनीश्वरेभ्यः।
वेदार्थ – वेदाङ्ग – रहस्य बोधम्
समुद्गिरन्तं च भृगुं ददर्श।।15।।

वृतं सदस्यैश्च तपोनिधिं तं
विलोक्य गोत्रर्षिमयं प्रसन्नः।
यावत्समीपं समुपैति रामो
विलोकितस्तावदयं मुनीन्द्रैः।।16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तपोभिरावर्जित देहकान्तिम्
सुबोध तत्त्वार्जितकान्तिवृत्तम्।
हरेरिवांशैरनु भावयन्तम्
भृगुः सशिष्यश्च ददर्श रामम्।। 17।।

प्रधर्षयन् तानथ तेजसाऽयम्
विस्मापयन् पार्श्वगतान् मुनीन्द्रान्।
रामश्च दूरादवलोकितोऽभूद्
तेजोभिरिद्धोऽनुमितोंऽशुमाली।। 18।।

भृगुं प्रणम्याह समेत्य दूराद्
प्रभो! मम त्वं भुवि वंशकर्त्ता।।
समागतोऽहं पितृभिः प्रदिष्टो
द्रष्टुं स्वगोत्रर्षिमगाधबोधम्।। 19।।

प्रभोः सदंशावतरं स्ववंशें
विलोक्य रामं धृतविग्रहं तम्।
भृगुस्तुतोषात्मकुले जनित्वाद्
वृद्धाः सुतान् वीक्ष्य भवन्ति हृष्टाः।। 20।।

पितामहस्यापि पितामहं तम्
भृगुं मुनीन्द्रैरधिसेवमानम्।
विलोक्य दूराज्जमदग्निसूनुः
नम्रः प्रणामो विचकार मूर्ध्ना।। 21।।

संजीवनीमन्त्रधराय लोके
विधेः सुतायापि च मंत्रवेत्रे।
भुवि स्वगोत्रस्य प्रवर्तकाय
नमो नमस्ते निजगाद रामः।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भृगुर्निवृत्तान्य कथा प्रसंगो
निपीय दृष्ट्यैव तदंगशोभाम्।
रामं हृदाऽलिंग्य विगृह्य दोर्भ्याम्
दृष्ट्याऽभिषेकोऽपि मुदा व्यधायि।।23।।

सम्प्राप्य वात्सल्यमशेषतोऽयम्
भृगोश्च रामः स्वकुलाद्यदेवात्।
प्रीतो भृशं चावसदत्र पश्यन्
मुनेः प्रभावञ्च तपो विशेषम्।।24।।

आज्ञापयच्चात्र कथं कुतस्त्वम्
प्राप्तोऽसि मां पुत्र वदस्व वृद्धम्।
येनेच्छितं तुभ्यमहं ददामि
मयि स्थिते सन्तु शमेन वंश्याः।।25।।

न्यवेदयद् वंशकराय तस्मै
गुरो ! दिदृक्षा स्वपितामहानाम्।
जाता पितुः प्राप्य तदा ह्यनुज्ञां
समागतोऽस्म्यत्र विलोक्य तृप्तः।।26।।

प्रसादये त्वामहमद्य मूर्ध्ना
समर्पयित्वा च नतिं पदान्ते।
यातुं प्रशाध्यद्य गुरो ! सुतं माम्
पितृन् प्रणम्यात्र सुखी न कः स्यात्।।27।।

वचांसि रामस्य निशम्य चाह
भृगुर्हितार्थं विनतस्य तस्य।
हिमालयं याहि शिवं स्वभक्त्या
सदा समाराधय शं लभस्व।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रीतो महादेव उपासनाभि
दर्स्यत्यशेषं तपसाऽथ भक्त्या।
मनोरथावाप्तिरिहापि ते स्याद्
शिवप्रसादादखिलाऽथ कीर्तिः।।29।।

जलेन पत्रेण तथाऽक्षतैश्च
भक्त्यार्पितः प्रीतिमुपैति शम्भुः।
प्रीतश्च मृत्युञ्जयतां ददाति,
तस्मात्समाराधय पुत्र ! शर्वम्।।30।।

नत्वा त्रिशूलं निजमर्पयित्वा
शिवं शिवायाशु शिवत्वमाप्त्यै।
जनाश्च तुष्टाः सततं स्मरन्ति
त्रिशूलिनं पुत्र ! भजस्व तस्माद्।।31।।

यः पापतापादिविषं जनानां
निपीय जातो भुवि नीलकण्ठः।
गंगाभिषेकाभिरतः सुधांशुः
प्रसेवते चापि स आशुतोषः।।32।।

विद्यानिधिर्यच्छति मुक्तिमिष्टाम्
विद्याधिपो राति सुबोधराशिम्।
विद्यागुरुर्वन्दितपादपद्मो
विद्यामतिस्त्वं शिवमाभजस्व।।33।।

इत्थं भृगोर्वाक्यममोघमंत्रं
विज्ञाय रामस्त्वरितस्तदानीम्।
पितामहं स्वं प्रणिपत्य मूर्ध्ना
समाससादाचलनाथसानु।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



हिमाचले रम्यवने विशाले
सरोवरेऽसौ विमलोदकान्ते।
इयेष शंभुं तपसाऽधिगन्तुं
रामस्ततापाथ चकार वासम्।।35।।

दिने दिने तस्य तपः प्रसिद्धिः
श्रुता मुनीन्द्रैस्तपसि प्रलीनैः।
व्रतेन पुष्टिञ्च दिदृक्षया ते
सर्वे समाजग्मुरथाश्रमान्तम्।।36।।

भृग्वत्रि–जाबालि–मृकण्डु–वाम–
देवक्रतु–प्रार्थिततत्तपः श्रीः।
रामाश्रमे भूरि तपश्चरन्तम्
समाययुर्भार्गवमीक्षणार्थम्।।37।।

दृष्टं श्रुतञ्चा चरितं मुनीन्द्रै
स्तपो महत् पर्वतराजभूमौ।
तथापि चैकान्त तपः प्रतिष्ठां
सशंसुरभ्येत्य मिथो मुनीन्द्राः।।38।।

सप्तर्षयश्चापि तपः प्रवृद्धा
हिमालयस्था ऋषयः ससिद्धाः।
तपोनिधिं भार्गवमाययुस्ते
वृद्धो भवेद्येन तपोभिरिद्धः।।39।।

भास्वन्तमुद्यन्तमनादिमीशम्
मन्त्रैः समाराध्य तमेव दध्यौ।।
ध्याने स्थितस्येव पुरः कुतश्चिद्
व्याधो मुनेश्चाश्रममाजगाम।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पप्रच्छ च ध्यानरतं विलोक्य
व्याधोऽस्म्यहं चास्य वनस्य राजा।
कस्त्वं चिकीर्षस्यधुना किमत्र
तोषाय कस्याद्य तपः करोषि।। 41।।

वाचं निशम्यापि च जामदग्न्यः
व्रती वशी नैव चुकोप तस्मै।
धीरस्तमाचम्य जगाद वाक्यम्
रामोऽस्यहं भार्गववंशजन्मा।। 42।।

चर्तुं तपः सम्प्रति संस्थितोऽहम्
गुरोः शुभाज्ञां परिपालनाय।
भक्तानुकम्पी भगवान् त्रिशूली
प्रत्यक्षतां नैति वसामि तावद्।। 43।।

यावन्न दीनोद्धरणे निमग्नः
पापापहारी च पिनाकपाणिः।
हरो भवेन्नाक्षिपथे मदीये
स्थास्यामि तावन्मतिरस्ति सत्यम्।। 44।।

राजा त्वमेवास्य वनस्य मान्यो,
न मे व्रते देव! करोतु विघ्नम्।
तपो विधातुं मम चात्र वासः
प्रयातु चास्मादचिरं मदर्थम्।। 45।।

ततस्तमूचे वनजः किरातः
त्याज्यस्त्वयाऽहं यदि विप्र ! चास्मि।
न दर्शनं मे सहवासनञ्च
त्वया यदीष्टं ह्यपसर्प चास्मात्।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रामस्तदाऽवोचदमुं किरातम्
भो ! व्याध ! जातोऽसि नृशंसजातौ।
खलानुकर्माभिरतिस्त्वदीया
हिंसारतस्त्वञ्च वनादपेहि।।47।।

व्याधोऽब्रवीन्मेऽस्ति तथाऽस्तु लोके
त्वमप्ययोग्योऽसि तथैव मन्ये।
शिवोऽपि छित्त्वाऽत्र शिरो विधेश्च
प्राप्तो फलं व्रह्मवधस्य गर्ह्यम्।।48।।

मुने! सुयोगात्तपसः प्रसिद्धिम्
प्राप्तोऽल्पकालेन न चित्रमेतद्।
त्वया कृतं मातृवधं च गर्ह्यम्
वने तपस्याचरणं करोषि।।49।।

चेदस्त्यहिंसाविहितस्त्वदीयो
धर्मः कथं त्वं स्वकरेण मातुः।
कृत्वा वधं लोकविनिन्दितं भो!
कुतः पुनर्धार्मिकतां प्रयासि।।50।।

छित्त्वा कुठारेण च मातरं स्वाम्
स्वधर्मनिष्ठोऽपि भवेद्धि कश्चिद्।
चेत्तर्हि घोरं तप आशुतोषं
तोषाय कस्माद्विदधात्यरण्ये।।51।।

अहं स्वपित्रोश्च सुतादिकानाम्
संपालनार्थं विदधामि हिंसाम्।
स्वधर्मबुद्धयाऽनुचरामि धर्मं
कथं भवाम्यद्य विनिन्दनीयः।।52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ममात्मनश्चापि निरूपय त्वम्
बुद्ध्याऽत्र कर्माणि प्रशंस निन्द।
धर्मोऽप्यधर्मः प्रभवेत्कथञ्च
विद्वान् सदा चिन्तय शान्तवृत्या।। 53।।

निशम्य वाचं जमदग्निसूनुः
व्याधेरितं तन्मनसा विचिन्त्य।
न जातिरस्यास्ति यथा ब्रवीति
विशंकमानः पुनराह शीघ्रम्।। 54।।

भो ! व्याधमूर्ते! वितथं ब्रवीषि!
कस्त्वं निगूढश्चरसीह लोके।
न प्राकृतस्त्वं मनुजो विभासि
मन्ये हरस्त्वं वपुषाऽऽप्यनेन।। 55।।

दृष्ट्वाऽनुभावं च तवाकृतिञ्च
भक्तानुरागी शिवदः शिवोऽयम्।
मन्ये बभौ मे दृशि गोचरोऽद्य
स्वरूपमादर्शय वस्तुतो माम्।। 56।।

परीक्षणार्थं मम भूतनाथः
व्याधाकृतिर्मामिह बोधनार्थम्।
कृपापरोऽभून्नतिभिः सहस्रैः
प्रसादनार्थं च समुद्यतोऽस्मि।। 57।।

तत्त्वं तदा ज्ञातुमसौ महात्मा
ध्यानस्थितोऽभूदुपविश्य भूमौ।
ज्ञात्वा मृगव्याधतनुं प्रभुं स्वं
रामो बभौ हर्षपरिप्लुतांगः।। 58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रोमञ्चितः प्रेमसमुद्रमग्नो
हर्षाश्रुसंपूरितनेत्रयुग्मः।
महामतिः शंकरमाशु मत्वा
पपात भूमौ पदयोः शिवस्य।। 59।।

स्वरूपमास्थाय शिवोऽपि सद्यः
पादानतं तं परिगृह्य दोर्भ्याम्।
हृदा परिष्वज्य मुदा च तस्मै
ददौ मुनीन्द्रार्थितमप्यशेषम्।। 60।।

परशुराममुनिस्तपसा शिवम्
परितुतोष मुनीन्द्रगतिं गतः।
कुलभवामनुशासनतो यथा
विजयतेऽखिलविप्रगणे तथा।। 61।।

।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये
परशुरामाशीर्वादप्राप्तिर्नाम सप्तदशः सर्गः।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अष्टादशः सर्गः

क्वचित्पृथिव्यामटमान ऐच्छद्
द्रष्टुं सहस्रार्जुनवैभवाद्यम्।
श्रीनारदो ब्रह्मसुतः सुरर्षिः
माहिष्मतीं भूरियशः प्रपेदे।।1।।

भुजैः सहस्रैः पृथिवीं पपार
चारैः सहस्रैश्च विवेद वृत्तिम्।
नेत्रैः सहस्रैर्जनदुःखवेत्ता
बुधैः स राजाऽनुगतः सहस्रैः।।2।।

श्रीकार्तवीर्येण सुशासितायाम्
श्री नर्मदापुण्यविगाहितायाम्।
श्रीवह्निदेवेन सुरक्षितायाम्
मुनिश्च खे सूर्य इवाबभासे।।3।।

गायन् हरेर्नाम सुगीतकीर्तिः
संवादयन् स्वां महतीं महात्मा।
माहिष्मतीं वैभवमण्डितां तां
संप्राप्य तद्राजगृहं प्रपेदे।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूति–प्रभा–भासित–राजधान्याम्
सिंहासनासीनममुं नरेशम्।
स्वस्तीत्यवोचत्प्रविलोक्य चाग्रे
राज्ञः सभामाविशदग्रजन्मा।।5।।

सहस्ररश्मेर्विभया परीतम्
सहस्रबाहुश्च मुनिं निरीक्ष्य।।
सहस्रधार्चामभितश्चकार
सहस्रवाक्यस्तुतिभिर्नुनाव।।6।।

दृष्ट्वा गृहे त्वच्चरणारविन्दम्
मोमुह्यते मे च मनः सुरर्षे! ।
नतिं विहायाद्य च किं प्रदेयम्
सदाप्तकामाय नमोऽस्तु तुभ्यम्।।7।।

तवागमश्चात्र ममान्वयस्य
हिताय मन्ये सुकृतोदयाच्च।।
दिव्याश्च भोगा अतुलाश्च लक्ष्मीः
कृपाकटाक्षाच्च मुने ! अवेहि।।8।।

सुवर्ण पीठासनमेतदेव
महार्हरत्नैरभिषज्जितं यत्।
मन्ये मुनीनामनुकम्पयैव
भवादृशानामिह ते पुरस्ताद्।।9।।

भूयात्सदा मेऽन्वयजा समृद्धिः
कुर्यात्सदा श्रीर्महिता सुवृद्धिः।
चंचच्चिरं मे सुखशांतिलब्धिः
तवानुभावान्न मतिः कुमार्गे।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वाचं निशम्याधिपतेः पृथिव्या
विज्ञाय चान्तः स्थितमाशु भावम्।
राजानमूचे सहजस्तपस्वी
क्व चाश्रमः श्री जमदग्निकस्य।। 11।।

यावन्मुनेराश्रमदर्शनं नो
राजन् भवेत्तावदियं समृद्धिः।
तपः प्रभावाज्जमदग्निजानाम्
समृद्धयस्तत्र लसन्ति विष्वक्।। 12।।

क्व ते महद्राज्ययशोऽभिमानः
क्व चाश्रमस्था महती समृद्धिः।
निभाल्य स्वर्गं विजहाति चेतः
मुनिर्नरेन्द्रादपि भोगसिद्धः।। 13।।

न चात्मजास्ते जगदात्मजस्य
न चान्वयस्ते जगदन्वयस्य।
न बन्धवस्तेऽखिलबान्धवस्य
न नारदोऽसीति च नारदस्त्वम्।। 14।।

प्रभो! भवन्तं गृहमभ्युपेतं
दृष्ट्वा मनो मे मुदतामुपैति।
गतं हि मन्ये मम दुःखजातम्
मुनिं विलोक्याशु न मे विशेषः।। 15।।

यशः प्रतिष्ठा बहुरत्नजाता
धनाढ्यता लोकजनैरभीष्टा।
पदे पदे मे लभते तथापि
दिदृक्षुरस्म्यैव भवादृशानाम्।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्रैलोक्यराज्यं विपुला च लक्ष्मीः
स्मरिष्यसि त्वं भुवि तावदेव।
प्रयाति दृग्गोचरतां न यावद्
शुभाश्रमश्रीर्जमदग्निलब्धा।। 17।।

पद्माननाः पद्मविशालनेत्रा
स्तावच्छुभास्ते ललनाभिरामाः।
यावन्न साऽघौघविनाशकर्त्री
विलक्ष्यते भूमिप ! रेणुकन्या।। 18।।

सन्तर्पिताश्चाश्रमवासिनोऽपि
श्री रेणुका – देवि– कृपा – प्रसादात्।
तथैव ते प्रीतिमवापुरिष्टा
मुनेः प्रियायाः सुरकामधेनोः।। 19।।

यस्याः प्रसादादखिलाश्च लोका
विनिर्जिता दानदयादिशीलैः।
मानान्नपानादिभिरर्चिताः स्युः
संराजतेऽसौ मुनिहोमधेनुः।। 20।।

न कोऽपि भोगो न च काऽपि वृत्ति
र्न शीलमस्मिन् भुवने विशिष्टम्।
न यत्प्रसादात्सुरभेर्मुनेश्च
वराश्रमे प्राप्तुमसंभवोऽस्ति।। 21।।

भोगान् सदैश्वर्ययुतान् विलोक्य
शुभाश्रमे श्रीजमदग्निकस्य।
तिरोभवेद्धैहयभूमिपाल!
तवैष वित्ताढ्यभरोऽपि भोगः।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवं समुद्गीर्य गते मुनीन्द्रे
सुविस्मितोऽभूदथ कार्तवीर्यः।
दिदृक्षयाऽसौ जमदग्निवासम्
क्षिप्रं ययौ भोगमतिप्रणुन्नः।।23।।

वीरः सहस्रार्जुनकार्तवीर्यः
सज्जीबभूवाशु सवाहिनीकः।
विप्राश्रमाभ्याशमसौ क्षितीशः
निशामुखेऽनीयत यामिनीञ्च।।24।।

चलन् ससेनो नृपतिर्दिनान्ते
वने विनिद्रः समुपोष्य रात्रिम्।
स्नात्वा शुचिः प्रातरसौ जजाप,
मन्त्रांश्च दत्तात्रयदत्तवर्णान्।।25।।

भक्त्या प्रभाते सवनं समाप्य
प्रावीविशच्चाश्रममर्जुनोऽपि।
तपः प्रभावाद् जमदग्निपुण्याद्
तमाश्रमं वीक्ष्य नृपः सुशोच।।26।।

दूराच्छ्रुता चाश्रम कीर्तिरुग्रा
यथा तथैवात्र विलोक्यतेऽपि।
धिङ्. राजभोगानिह सर्वभोगा
मुनेर्निवासे विलसन्ति चेष्टाः।।27।।

रत्नप्रभा – भासित– भूरुहाणाम्
फलैः सुपुष्पैश्च विलासितानाम्।
वनं विभात्येव च यत्र वन्या
विहाय वैराणि चरन्ति हिंस्राः।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुशोभितस्तापसमण्डलैश्च
हुताशकुण्डावलिभिः समन्तात्।
महीसुरावासकुटीरयूथैः
शुभाश्रमो भाति च भार्गवस्य।। 29।।

हस्तस्वराभ्यासरताश्च शिष्याः
कण्ठस्वरेणापि पठन्ति मन्त्रान्।
मन्ये चतुर्वेदमयी सुमूर्तिः
पुण्याश्रमेऽस्मिन् विहितावतारा।। 30।।

नित्याहुतिं प्राप्य सुवर्द्धितोऽग्निः
तमाश्रमं धूम वितानरीत्या।
व्याप्याखिलं पावयतीह भासा
स पावकः कं न पुनाति जुष्टः।। 31।।

क्वचिन्मृगास्तृप्तिमनुव्रजन्ति
यथेच्छया मुक्ततृणा भ्रमन्ति।
क्वचिच्च रोमन्थमवासृजन्ति
सदाऽश्रमावासिभिरेव पुष्टाः।। 32।।

सुश्राव च ध्यानपरो व्रतस्थो
मुनिर्जनैर्भैरवमेव रावम्।
हता मृगाश्चाश्रमबद्धवासा
रिरक्षयाऽऽयान्ति च यान्ति वेगाद्।। 33।।

पतन्ति धावन्ति तथोत्पतन्ति
ध्वनन्ति हन्तुर्विमुखाः प्लवन्ति।
मृगा द्रवन्त्येव धिया वनान्ते
वन प्रवेशे सति कार्तवीर्ये।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मृगाश्च वन्याः पशवो खगाश्च
विहिंसितास्तेन नृपेण दर्पात्।
विज्ञाय रुष्टो न बभौ तदानीं
वशी वदान्यो जमदग्निदेवः।। 35।।

समागतं स्वाश्रममर्जुनं तं
विलोक्य धेनुं मुनिरभ्युवाच।
हे देवि ! जानासि नृपाय कार्यं
यत्स्वागतार्थं त्वरयाऽनुशंस।। 36।।

राजाऽतिथिर्मेऽस्ति सुपूजनीयः
त्वयाऽद्य धेनो ! प्रतिपादनीयः।
पूजाविधिर्नास्ति मदन्तिकेऽन्यः
मुनिञ्च धेनुः प्रणयादुवाच।। 37।।

दास्यामि राज्ञे क्षुधिताय तस्मै
भोज्यं ससैन्याय समादरेण।
उच्चावचैरन्नजलैः समेतम्
ससेनमावाहय चाश्रमे तम्।। 38।।

तपोनिधिस्तं नृपतिं समूचे,
क्षितीन्द्र ! ते स्वागतमस्ति गेहे।
त्वया विधेयः सगणेन वासो
ममाश्रमे भोजनमाकुरुष्व।। 39।।

समादरः स्यात् नृपभोजनञ्च
श्रेष्ठं भवेद् विप्रगृहाशनञ्च।
पवित्रमात्मानमलं विधातुं
तवाश्रमे भोक्तुमहं वृतोऽस्मि।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



फलैश्च कन्दैरथ मूलकैर्वा
राजन् भवेद् भोजनमत्र वेत्थ।
नान्नानि चान्यानि हि भोजनार्थम्
भवन्ति भूयो जमदग्निवासे।।41।।

द्विजैः सहासौ नियमानुसेवी
स्नातुं ययौ देवनदीं मुनीशः।।
सन्ध्यां समाप्यागतवान् विधिज्ञः
जपञ्छनैर्भास्करमन्त्रवर्णान्।।42।।

विचिन्तयामास स कार्तवीर्यः
गृहे न धान्यानि न वह्निधूमः।
न पाकपूर्णः प्रविधिर्मुनीन्द्रैः
प्रवञ्चितोऽस्मीति न संशयोऽत्र।।43।।

मुनीश्वरोऽसौ जमदग्निदेवः
शुचिः सुरेन्द्रप्रहितामुपेत्य।।
स्वकामधेनुं प्रणिपत्य भक्त्या
कामानशेषानभियाचताशु।।44।।

नमो नमो देवि! तव प्रसादाद्
नृपस्य सुस्वागतमद्य कार्यम्।
त्वमत्र मातः सुरपालकेन
दत्तासि देवातिथितर्पणार्थम्।।45।।

त्रिविष्टपात् त्वं सुरवृन्दवन्द्या
ममाश्रमस्थाऽसि सुरार्चनार्थम्।
तथातिथीनामभितोषणार्थम्
ममाद्य कार्यं कुरु ते नमोऽस्तु।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



राज्ञः पुरो दिव्यरसान्वितानि
बहूनि भोज्यानि महात्मनेऽदात्।
हृष्टा वरान्नाभरणनि वस्त्रा
ण्यलञ्च पात्राणि सु–कामधेनुः।।47।।

विचित्रभोज्यानि फलानि चापि
न पूर्वदृष्टानि रसान्वितानि।।
नृपेण भुक्तानि गणेन सार्द्धम्
सविस्मयेनापि मुनेर्निवासे।।48।।

स भूमिपालः सगणोऽथ भुञ्जन्
ददर्श रत्नानि विभूषणानि।
बहूनि वस्त्राभरणानि धेनुम्
तथा सुरूपामपि रेणुकन्याम्।।49।।

महर्षिणा तेन सभाजितोऽभूद्
नृपः सभार्यः सगणः समन्ताद्।
शुभार्घ्यपाद्याचमनैश्च माल्यैः
शुभैर्वचोभिश्च तपोवनेऽपि।।50।।

स कार्तवीर्य्योऽपि निकृत्तवीर्य्यः
बभौ विलोक्याथ च रेणुकन्याम्।
अनिन्द्यसौन्दर्यभृतासु मुख्याम्
मनोविकारेण भृशं तताप।।51।।

अहो ! सुरूपत्वमहो ! च धैर्यम्
अतुल्यगाम्भीर्यमहो ! प्रभुत्वम्।
नारीषु सौन्दर्यमथाद्वितीयम्
विलोक्य राजा प्रमुमोह नुन्नः।।52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुने ! त्रिलोके तव तुल्यमन्यो
न कोऽपि कीर्त्या विभवैर्गुणैश्च।
तपस्यया चातिथिपूजनाद्यै
र्मन्ये भवानेव भवादृशोऽस्ति।। 53।।

विलोक्य ते भूतिमशेषवन्द्याम्
सुरर्षिवाक्यं भवति स्मृतञ्च।।
न वेद्मि ते मन्त्रफलं तदित्थम्
तपः फलं वास्ति मुने! प्रसिद्धम्।। 54।।

मुनिस्तमूचे श्रृणु भूमिपाल !
समागतो देवपतिः कदाचिद्।
ममाश्रमं द्रष्टुमतिप्रसन्नः
समर्पिता धेनुरियं च तेन।। 55।।

समागतानाममरातिथीनाम्
सुपूजनार्थं च शुभाश्रमेऽस्मिन्।।
मया यया ते सगणस्य चापि
सम्पादितं स्वागतमस्ति सा गौः।। 56।।

विधीयते चार्हणमर्हते ते,
वरोऽसि च ज्ञानवतां त्वमद्य।
नृपेन्द्र ! यत्किञ्च यथावकाशम्
कृतं तवातिथ्यमिदं गृहाण।। 57।।

स हैहयाधीश उवाच काले
निशम्य वाक्यं च मुनेस्तदानीम्।
प्रदीयतां धेनुरियञ्च मह्यम्
तदाऽर्हणं ते सफलीकरिष्ये।। 58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुरंदरेणेयमशेषदेव–
कार्यार्थ मासीददतिथिव्रतार्थम्।
दत्ता पुरा तां सुरवन्दनीयाम्
हित्वाऽन्यदिच्छस्व प्रभो ! पुराणीम्।। 59।।

न मे धनं नैव समृद्धिरिष्टा
तपोवने चापि तपः प्रदिष्टे।
तपोव्रतं धारयितुं मदन्ते
सर्वस्वमास्ते सुरभिर्ममैषा।। 60।।

पित्रर्षिदेवप्रविधीन् विधातुं
तपोवनातिथ्यमलं प्रकर्तुम्।
ममाश्रमप्राणवती च धेनु
र्विहाय तां प्रार्थय भूमिपाल!।। 61।।

दास्यामि राज्यार्द्धमहं मुनीश !
स्वकामधेनुं परिदेहि मह्यम्।
नेष्यामि नान्यद्दयितं मदीयं
प्रसादय त्वं ह्यतिथिं नृपं माम्।। 62।।

राजाऽसि दाताऽसि ददासि दानम्
सदोत्तमं राज्य महीसुरेभ्यः।
किमद्य दीनां सुरधेनुमिच्छन्
दुनोषि संत्यक्तुमहो न जाने।। 63।।

त्वयैव दातव्यमशेषवित्तम्
त्वयैव पूज्या विबुधा बुधाश्च।
महीसुरा भूपतिभिः सदैव
दानार्चिताश्चापि भवन्ति तुष्टाः।। 64।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गिरं निशम्याथ मुनेः स राजा
बभाण च प्रोक्तमवैमि तेऽद्य।।
तथापि मह्यं विनताय देहि
सुरेन्द्रदत्तां निजकामधेनुम्।। 65।।

धर्मो भवेद्वाथ भवेदधर्मः
नृपाय गोदानमिदं न जाने।
गृहागतायातिथियाचकाय
कर्त्तव्यमूढो मुनिराबभूव।। 66।।

न मेऽतिथिः स्याद्विमुखः कदापि
न दुष्टवाक्योद्गिरणं भवेच्च।
यथा तथा धेनुरियं सुपाल्या
दध्यौ मुनिः कर्मविकर्ममूढः।। 67।।

तदा मुनिं वीक्ष्य नृपस्तमूचे
न विप्र ! मिथ्यावचनं कुरुष्व।
राज्ये मदीये च ममेप्सिता गौ
र्धनं मदीयं भवतीत्यवेहि।। 68।।

राजाऽस्म्यहं त्वं मम शासनेऽसि
धेनुस्तवैषाऽपि मुने मदीया।
नेष्यामि चेमां निजराजधानीम्
न मे तवाज्ञानियमानुबन्धः।। 69।।

नो चेत्प्रदास्यस्यहमद्य धेनुं
बलाद्हि नेष्यामि तवाश्रमाच्च।
गर्वोक्तिमाश्रुत्य च कामधेनुः
मुन्यग्निशालां रभसाद् प्रविष्टा।। 70।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जगाद सा भो ! मुनयोऽग्नयश्च
सुरा महीदेवगणाः शृणुध्वम्।
बलाद्धि मां नेतुमयं क्षितीन्द्रो
दुरुक्तिमुच्चैः कुरुते च दुष्टः।। 71।।

अहं तु देवव्रतिनां मुनीनां
हुताशनानाञ्च कृते स्थिताऽस्मि।
प्रधर्षितुं मां न सुरा सुरेन्द्राः
कथं समर्थोऽस्ति च कार्तवीर्यः।। 72।।

मान्योऽतिथिश्चास्य मुनेर्नृपोऽस्ति
सुपूजितश्चापि तथा स तेन।
अक्रोधनं शान्तमुनिं प्रहस्य
ततो वदत्येष हि कार्तवीर्यः।। 73।।

नाहं गमिष्यामि नृपस्य पार्श्वं
माहिष्मतीं चार्जुनराजधानीम्।
मुने! किमर्थं न करोषि भस्म,
स्वमन्युनेमं नृपमाशु दृष्टम्।। 74।।

श्रुतं न केनापि हतोऽतिथिःस्याद्
सुदुर्विनीतोऽपि गृहागतश्च।
अतःक्षमो घातयितुं न देवि!
स्वधर्मतोऽहं प्रभवामि सत्यम्।। 75।।

गां धर्षितुं भूमिपतौ प्रवृत्ते
विनिर्गता हुंकृतिजाश्च धेनोः।
नरा अनेकायुधहस्तसज्जाः
मृत्यूपमाश्च प्रलयाग्निकल्पाः।। 76।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रुद्धा विजघ्नुःशतशःप्रवीराः
शस्त्रैरनेकैर्बहुशस्त्रपूर्णम्।
तं कार्तवीर्यं सगणं प्रमथ्य
रथं रथेशं पृतनामुदग्राम्।।77।।

विदारितं सैन्यमवाप्य बंधु–
पुत्रान्वितं म्लेच्छगणैर्विलोक्य।
नृपोऽब्रवीद् भो! जमदग्निदेव!
त्वत्कामधेनोर्निहता ममैते।।78।।

मुने! स्वसैन्यं विपुलं विलोक्य
तूष्णीं भवानत्र कथं स्थितोऽस्ति।
हतं सहस्रार्जुनसैन्यमिष्टम्
न कामधेनुर्वशगा ममाभूत्।।79।।

आज्ञापयत्वेव करोमि यत्ते
भवेत्सुखायाशु च कामधेनुः।
मुनेः समीपं विनता स्थिताऽभूद्
मन्ये स्वकार्यानुमतिप्रबुद्धा।।80।।

भो! कामधेनो! विजयस्व नित्यम्
वध्यस्त्वयाऽयं कृतवीर्यसूनुः।
मयाऽपि तद्वत् किमहं करोमि
कोपं परित्यज्य दुनोमि चाहम्।।81।।

काकद्युतिस्ताम्रविलोलनेत्रः
प्रादुर्बभौ क्रोधवपुश्च कृष्णः।
मुनिं जगादाप्यनुवर्तनाय
प्रदर्शयन् क्रोधमहत्त्वमिष्टम्।।82।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मया बिना भार्गव! चासि दीनः
मत्त्यागजन्यं फलमेतदस्ति।
स्थितोऽसि तूष्णीमिह दुःखपूर्णो
भयं च दैन्यं समुपस्थितं ते।।83।।

शस्त्राणि वीर्याणि बहूनि चास्त्रा–
ण्यशेषतेजांसि च पौरुषं वा।
मया बिना न प्रभवन्ति लोके
नरस्य कस्यापि मुने! अवेहि।।84।।

जिजीविषा चेदथ मां गृहाण
रणे नरेशं सगणं जयस्व।
रिपून् विनिर्जेतुमहं तवाज्ञां
स्वीकृत्य शत्रून् विनिहन्मि विप्र!।।85।।

क्रोधेन भूयोऽपि समीरितःसन्
मुनिश्च तूष्णीं सहसा बभूव।
पूर्वं परित्यक्तविकारभावम्
मनस्विनो नोन्मुखतां व्रजन्ति।।86।।

कोपोऽपि दृष्ट्वा विमुखं मुनीशम्
प्रणम्य मूर्ध्नाऽथ तिरोहितोऽभूत्।
दृढ़व्रतानां भृगुवंशजानां
क्रोधोऽपि नोल्लंघयितुं समर्थः।।87।।

दृष्ट्वा प्रवृत्तं मुनिकोपयोश्च
पुरःस्थितोऽसौ कृतवीर्यपुत्रः।
समाययौ स्वां प्रति राजधानीम्
मुनिं विजेतुं मनसा शुशोच।।88।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विजित्य कोपं व्रतमाचरन्तम्
विकारराशीन् परिवर्जयन्तम्।
सदा सदाचारमुपाश्रयन्तम्
मुनिं विजेतुं भुवि कः समर्थः।।89।।

भोगेष्वनुत्सेकतयाऽप्यरण्ये
वसन् मुनीन्द्रोऽपि नरेन्द्रकोपाद्।
प्रचालितोऽभूद् विजिगीषया यद्
तदस्ति सर्वञ्च रजोगुणोत्थम्।।90।।

एवं विचिन्त्य मतिमानपि कार्तवीर्यः
गां नेतुमिच्छननिशं भृशमुत्तताप।
मन्ये नृपोऽनयपथे गमनादवश्यम्
राज्यं विभूतिममृतत्त्वमलं हिनस्ति।।91।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये कार्तवीर्याचरणं नामाष्टादशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# एकोनविंशः सर्गः

विदूयमानमानसो महीपतिः समाययौ
स्ववासभूमिमाप्तुमेव कामधेनुमुन्मनः।
पुरोहितानपृच्छतात्ममंत्रिसंमतिं व्यधात्
सभासदान् सभागतानुवाच राज्यपालकः।।1।।

सदाग्निदेवपालितञ्च दत्तमंत्ररक्षितम्
सुरेन्द्रभोगमण्डितम् सुरासुरैरभीप्सितम्।
समृद्धिलास्यलासितञ्च कार्तवीर्यशासितम्
वृथा विलोक्य जामदग्न्यमाश्रमं भुवस्तले।।2।।

मनोज्ञमन्दिरावृतं विलासिनीभिरञ्चितं
न पूर्वदृष्टवैभवं धनं न दृष्टसंक्षयम्।
प्रसादराजिराजितं महर्घभोगसज्जितम्
मुनेश्च कामधेनुजन्यमास्तृतं तपोवने।।3।।

न राजहर्म्यमण्डले न देववृन्दमन्दिरे
न भोगिलोकभोगयोग्यता कदापि लक्ष्यते।
यथा विलोकितञ्च वैभवं मया तपोवने
मुनेश्च रेणुकापतेः स्पृहा भवेत्पदे पदे।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नृपाश्च रत्नसंग्रहे परायणाः स्मृताः सदा
कथं न धेनुरत्नमाप्तुमुत्सहे यथार्थतः।
क्व साम्प्रतं महीसुरस्वमात्मसात्करोमि चेद्
भवेदधर्मचारिता न वेति संशयेऽस्म्यहम्।।5।।

तदा सुधीवरः पुरोहितो जगाद भूमिपम्
मुनिश्च गर्गनामको न विप्रवित्तहारणम्।
शुभावहं श्रुतं मया कदाऽपि लोकविश्रुतम्
त्यजाशु विप्रवित्ततो मतिं महेश्वराधिप!।।6।।

कदाचिदापदि स्थितोऽपि विप्रवित्तकर्षणम्
यदा भवेत्तदा स्ववंशनाशकः स्मृतो बुधैः।
नरेन्द्र ! नास्ति युक्तमेतदाशु सन्मतिं कुरु
विहाय विप्रवित्तहारणं विधेयमुत्तमम्।।7।।

वदान्यभूभुजां कुले जनिर्नृपेन्द्र! विश्रुता
महीतले वरिष्ठता प्रतिष्ठिताऽन्वयस्य ते।
विदिक्षु दिक्षु मण्डितं यशश्च मा व्यनीनशः
कदापि राज्यदा न मूढ़बुद्धिमन्त्रणा भवेद्।।8।।

निशम्य चामृतां गिरं स्वराज्यवृद्धिसम्मिताम्
स्वजातिमंगलं विचिन्त्य विप्रपक्षपातजाम्।
चचाल भूपतिश्च भूसुरावमाननाविधौ
प्रसह्य धेनुकर्षणे मतिं व्यधान्न रक्षणे।।9।।

यदा यदा जनाः स्वभोगभावनासमन्विताः
समर्पितं सदैव राष्ट्ररक्षणे गवां कुलम्।
महीभुजस्तपोवनात्प्रसह्य भोक्तुमुद्यताः
तदा तदा भविष्यतीह राष्ट्रसंक्षयं ध्रुवम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नृपेण दारुणं कृतं तपोधनावमाननम्
प्रसह्य कामधेनुकर्षणार्थमुद्यतो बभौ।
पयस्विनी प्रताड़िताऽऽश्रमाद् बहिश्च कारिता
दिवंगता च सा भुवं विहाय विस्मितो नृपः।। 11।।

रुदन्तमेव कामधेनुवत्समाश्रमात् तदा
नृपस्य किङ्कराः समानयन् महेश्वरं मुदा।।
यदा सुताः समित्कुशार्थमाश्रमाद् बहिर्गता
मुनेश्शिरश्चकर्त्त हैहयाधिपो विमोहितः।। 12।।

रुरोद रेणुका हतं पतिं विलोक्य चाग्रतः
तताड चैकविंशधा हृदि स्वहस्ततोऽपि सा।
निशम्य चार्तविस्वरं प्रधावमान आययौ
कुठारधारको भृगूत्तमः सुतोऽन्तिमस्तदा।। 13।।

निपातितं तपोभिरुल्वणं भुवस्तले शवं
पितुर्विलोक्य कार्तवीर्य्यकीर्तिधूमकेतुकम्।
गवार्थमात्मजीवनं ददौ मुनीश्वरस्तदा
विचिन्त्य भूरि कोपकम्पितश्च भार्गवाधिपः।। 14।।

स्वमातरं विलापमज्जितां विलोक्य रेणुकां
सुतो ननाम पादयुग्मकञ्च भक्तिपूर्वकम्।
ह्युवाच देवि हन्तुमद्य यामि तं नृपाधमं
ससेनमेव सान्वयञ्च कार्तवीर्यकं रणे।। 15।।

उरः स्थलं त्वयैकविंशधा प्रताडितं पुरः
निहन्मि चैकविंशधाऽहमन्वयं महीभुजाम्।
क्षतान्न रक्षणे रताः कथं हि सन्ति तेऽक्षताः
न राष्ट्ररक्षका यदा नृपा न हिंसनेऽप्यघम्।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सतूणचर्मकार्मुकं कुठारमोजसा दधन्
सहस्रदीधितिप्रभानुभासितं वपुर्भृतम्।
स्वदेशरक्षणाय विप्रधेनुसूदकं नृपम्
निहन्तुमुद्यतः स राम एक आशु निर्ययौ।।17।।

अनिष्टनाशनं विरोधिशाशकैरजेयता
सुवर्णयानसंस्थितिः स्वकामतो गमागमः।
सहस्रदोःषु शक्तिसञ्चयश्च दिक्षु संजयः,
सुदत्तमंत्रतोऽभवन् गताश्च धेनुकर्षणात्।।18।।

उदीयमानमन्यभास्करं यथाऽम्बरात्तदा
ददर्श नारदं भृगूत्तमो भुवस्तलागतम्।
प्रणम्य राम आह नारदं भृशं परिष्वजन्
प्रभो प्रयाहि नर्मदां सुरर्षिवृंदसेविताम्।।19।।

पुराऽर्जुनेन पूजितस्तपोभिरर्चितः शिवो
निशाचरं च तस्य रक्षणार्थमादिशत्तटे।
वसन् विदूषयत्यलं सदामिषाशने रतः
रिरक्षया च नर्मदानुगान् जहीह राक्षसम्।।20।।

ययौ च नारदेन सार्द्धमेष भार्गवो बली
निशाचराधिवासवृक्षमन्तिके जगर्ज सः।
बलाच्च भीषयन् कुशद्वमीरयन् समागतो
निपातितः परश्वधेन भार्गवोऽपि वेगतः।।21।।

तपोभिरन्वितं मृकण्डुसूनुमाश्रमस्थितं
दिद्दक्षया सुरर्षिणा सहाययौ तदा प्रभुः।
प्रणम्य संस्थितः पुरो विलोक्य चाव्रवीन् मुनिः
वद स्वकौशलं कुलस्य वृत्तमाशु मंगलम्।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुवत्स! चाश्रमस्य विघ्नकारिणं जहि स्वयम्
मुनीन्द्रमांसपीनदेहधारकं निशाचरम्।
त्रिशूलपाणिमाश्रमेऽन्तरिक्षमाश्रितं सदा
निरुध्य मार्गमेव यायिनां च पापकारिणम्।। 23।।

तरौ तरौ वने वसन्तमाधिकारिणं सदा
मुनीन्द्रवृन्दमत्तुमुद्यतं तपोवनस्थितम्।।
कुरूपधारिणं भिया व्रतादिविघ्नकारिणम्
निशाचरं जहीह धर्मरक्षणाय चाश्रमे।। 24।।

निशम्य चाश्रमे ध्वनिं समागतस्त्रिशूलधृक्
प्रकम्पयन् तरून् जगर्ज गर्वमत्तमानसो।
शरेण रेणुकात्मजोऽवधीच्च राक्षसं बली
न्यपातयच्च कार्तवीर्यहर्म्यपार्श्वगोपुरे।। 25।।

चचाल सा पुरी भृशं मही च भग्नमन्दिरा
निशाचरस्य पातनप्रवेगकम्पितो नृपः।
विचिन्त्य भूर्यनिष्टमद्भुतं सविस्मयः पुनः
चिरं शुशोच सोऽर्जुनः प्रभुं मनस्यधारयत्।। 26।।

स्ववंशनन्दनो विलोक्य भार्गवस्तु नर्मदाम्
नमश्चकार पुण्यभावभूषितः प्रभुस्तदा।।
नमोऽस्तु नर्मदे ! महेशदेहसभवे ! च ते,
विनाशय त्वमद्य मे रिपूंश्च देवि ! शर्मदे!।। 27।।

चलत्तरङ्गरिङ्गणैः प्रवाहभिन्नजर्जरैः
सुधाम्बुपूरपूरितैः सुवीचिवीथिसज्जितैः।
स्वभक्तिपूर्णमानसानुगाभिषेकजैरहो !
सुपापशैलचूर्णबिन्दुरङ्कितं ध्रुवं तनुः।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विलोक्य तेऽम्बुराशिमन्तकोऽपि नान्तकृद् भवेद्
जलाभिषेकमाप्तुमुच्छलन्मनोवहा नराः।
यदा निमज्जनं विधाय निःसरन्ति नर्मदे!
तदा विपापतां प्रयान्ति तेऽनुभावभाविताः।। 29।।

न विप्रघातकाय धेनुपीडकाय नो क्वचिद्
प्रदीयतां त्वमम्बिके च शान्तिमीप्सितां प्रियाम्।
तवान्तिकाधिवासकारिणं मुनिं निहन्ति चेद्
क्वचिन्नृपः कथं त्वयाऽभिरक्षितो भवेत्सदा।। 30।।

प्रणम्य नर्मदामगात् भृगूत्तमो महेश्वरम्
महेश्वराधिपं विहाय पद्मजा गता दिवम्।।
स्वकर्म पाकजं फलं च भोक्तुमर्जुनस्तदा
करोति यत्तदश्नुते नरो ध्रुवं कृताकृतम्।। 31।।

रणाजिरे विशारदा रथाश्वहस्तिवाहकाः
पदातयोऽप्यनेकशः सहस्रकोटिभूमिपाः।
सुसज्जिता महाबलाश्च कार्तवीर्य सैनिका
असंख्यमण्डलान्विता रणाय संप्रतस्थिरे।। 32।।

विदिक्षु दिक्षु विस्तृता च राजसैन्यमेदिनी
रवोऽपि सर्वतोऽनिशं जनैः प्रतन्यते भृशम्।।
तटेऽथ नर्मदोत्तरे वटस्य मूलमाश्रितः
कुठारधारको ददर्श कार्तवीर्यवाहिनीम्।। 33।।

सहस्रबाहुवाहिनीविशालतां विलोकयन्
सहस्रनेत्रपौरुषाधिकं नृपं विचिन्तयन्।
जहर्ष भार्गवस्तदा समुत्थितः समेधितः,
परश्वधायुधो व्यजृम्भतारिनाशबुद्धितः।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यथा यथा परश्वधेन वायुवेगसर्पणम्
तथा तथा भुजोरुकन्धरा निपातिताः पृथक्।
हया गजा नरा निपेतुराशु भार्गवेरिता
जगर्ज भार्गवो रणे नृपाश्चकम्पिरे भृशम्।।35।।

विदर्भजोऽथ मैथिलोऽपि मागधश्च नैषधो
नृपाश्च कार्तवीर्यसैन्यमण्डले नियोजिताः।
वृहद्वलश्च सोमदत्त–मत्स्यराज–भूमिपौ
रणाङ्गणे मृताश्च जामदग्न्ययुद्धसंगरे।।36।।

अवन्तिजाः सुराष्ट्रजाश्च कान्यकुब्जसंभवा
ववर्षुरुद्धताः शराः भृगूत्तमे निरन्तरम्।
चकर्त्त बाणजालमाशु भार्गवो रणाजिरे
निहत्य शत्रुसैनिकान् रराज राजमूर्धनि।।37।।

त्रिरात्रयुद्धभूमिगो वियोद्धुमुद्यतो बली
ननाश चाशु विक्रमोऽप्यसंख्यवीरमेदिनीम्।
निशम्य सर्वनाशमात्मनः सुचन्द्रनामकः
समाययौ नियोद्धुमेव भार्गवान्तिकं नृपः।।38।।

रणाङ्गणेऽथ सूर्यवंशसंभवः सुचन्द्रकः
चकर्त्त रामशस्त्रजालमाशु युद्धपण्डितः।
चुकोप भार्गवोऽपि संदधे च वैष्णवास्त्रकम्
रणे जलाभिमंत्रितं नृपेऽक्षिपद् वधाय तद्।।39।।

सहस्रसूर्यसन्निभं तदस्त्रमुत्तमं हरेः
ननाम युद्धभूमिगः सुचन्द्रभूपतिस्तदा।
विहाय चानतं तमाशु विष्णुसन्निधिं ययौ
वृथा बभौ तदस्त्रपातमप्यहो सुरैः स्तुतः।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गदां परश्वधं सतोमरञ्च पट्टिशं मुधा
स्वशक्तिमाक्षिपन्नृपे रणाजिरे स भार्गवः।
सविस्मयोऽरिसूदनस्त्रिशूलमक्षिपत्तदा
नृपाय पुष्पमालिकेव शस्त्रवर्षणं बभौ।।41।।

पुरो ननर्त रक्षितुं नृपस्य चन्द्रकस्य सा
भयङ्करी जगत्प्रसूस्त्रिशूलधारिणी तदा।
गलेऽपि मुण्डमालिका च सिंहवाहने स्थिता
रणे रराज रामपार्श्वगा च भद्रकालिका।।42।।

मुहुर्मुहुश्च शस्त्रपातघातशून्यतां तदा
रणे विलोक्य विस्मितः परश्वधायुधो यदा।।
समागतां विलोक्य भद्रकालिकां भृगूत्तमः
प्रणम्य चोक्तवान् स्वराष्ट्ररक्षणे धृतव्रतः।।43।।

अरातिवृन्दभीतिदे! सदार्तिवृन्दमुक्तिदे!
मुनीन्द्र–देव–धेनु–शत्रुनाशिके करालिके!।
प्रवृद्धदर्पभूपवंशमाशु नाशने रतं
स्वराष्ट्रभूतिहेतुकं त्वमद्य मां दृढ़ीकुरु।।44।।

उवाच भद्रकालिकाऽपि जामदग्न्यमिच्छितं
प्रियो ममैष मद्गृहं नयाद्य पावकेषुणा।
जयस्व राजसंगरेष्विमं प्रपाहि पार्षदम्
समुद्यतस्तदस्त्रमेव संदधे स वाग्यतः।।45।।

ददाह पावकास्त्रजोऽनलः सुचन्द्रकं तदा
ययौ स भद्रकालिकान्तिकं बभूव पार्षदः।
अवाप्य रामवन्दनां तिरोहिता तदाम्बिका
प्रतीक्षमाण एव भूपतिं रणे स्थितः प्रभुः।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दुर्वाससा समधिगम्य दशाक्षरीं यां
विद्यां महादिसहितां स सुचन्द्रदेवः।।
जातोऽमरः सकवचोऽपि च भद्रकाल्याः
प्राप्तः स्वभक्तिपदवीमथ पार्षदोऽभूत्।।47।।

इत्थं सुचन्द्राधिपतिं विजित्य
त्र्यक्षौहिणीसैन्ययुतं महीपम्।
तं पुष्कराक्षं विनिहन्तुमुग्रो
युद्धोद्यतोऽभूदथ जामदग्न्यः।।48।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये सुचन्द्रवधो नामैकोनविंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विंशः सर्गः

स पुष्कराक्षोऽपि सुचन्द्रसंभवो
निशम्य मोक्षं स्वपितू रणाङ्.गणे।
चुकोप युद्धाय चचाल सत्वरम्
प्रतीक्षमाणं भृगुनन्दनं रिपुम्।।1।।

सहस्रभान्वन्वयजोऽरिसूदनो
महाश्रियस्तत्कवचं दधार सः।
गले स्थितस्याथ च यस्य कोऽपि तं
त्रिलोकमध्ये न विजेतुमुद्यतः।।2।।

महो महालक्ष्मिभवम् प्रकाशते
विलोक्य योद्धुं जमदग्निसूनवः।
समाययुः शस्त्रधराः समन्ततोऽ
प्यहिंसनैते समरे महीपतिम्।।3।।

गदां भुशुण्डीं परिघञ्च शक्तिकम्
धनुश्च शस्त्राणि तथास्त्रमालिकाम्।
परश्वधं मुद्गरपट्टिशादिकम्
प्रचिक्षिपू रामसहोदरा नृपे।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदङ्.गसंसर्गमवाप्य चूर्णिता
बभूवुरादित्यनिभाः प्रहारकाः।
सुविस्मिता रामसहोदरा रणे
नृपेन्द्रसेनां परिजघ्नुरातुराः।।5।।

स पुष्कराक्षः कवचाभिरक्षितो
न विव्यथे जातु सुघातकर्तृभिः।
निचिक्षिपुस्ते जमदग्निसंभवा
नृपं निहन्तुं शिवशूलमुल्बणम्।।6।।

त्रिशूलमायान्तमसौ ननाम तं
बभौ गले पुष्करमालिकेव तद्।
विलोक्य वीरस्य प्रभावमीदृशम्
महीसुरास्ते मनसा पराजिताः।।7।।

नृपो मृधे प्रस्वपनेषुणा ततो
विनिद्रितांस्तान् प्रचकार भार्गवान्।
महाबलो वीक्ष्य सहोदरांस्तथा
प्रबोधयित्वा समरे ययौ प्रभुः।।8।।

अमोघवीर्यं परशुं नृपं प्रति
ह्यचिक्षिपद् भूपजिघांसया तदा।
प्रकर्तितं तेन किरीटमुज्ज्वलम्
पपात भूमौ परशू रंणाङ्गणे।।9।।

लघुः स रामः परशुं भुवस्तलाद्
सवेगमित्थं जगृहे महाबलः।
पुनस्त्रिशूलं परिचिक्षिपे नृपे
शिवं गतः कुण्डलकर्त्तनान्तरम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नृपाय शस्त्रास्त्रविधौ गतौजसे
प्रयोक्तुमैच्छद्भृगुवल्लभो रुषा।
शिवं स्तुवन् पाशुपतं महास्त्रकम्
पुरो हरिस्तावदलं समाययौ।। 11 ।।

अवोचदेनं स हि विप्ररूपधृक्
प्रभुर्भृगो वत्स! करोषि किं रुषा।।
जगद् भवेद् पाशुपतेन नाशितम्
हरिं बिना माऽस्य कुरु प्रयोगकम्।। 12 ।।

महाश्रियो यत्कवचं सुदुर्लभम्
विराजते तस्य गले सुतस्य च।
न कोऽपि जेता कवचे गले स्थिते
न पुष्कराक्षस्य वधोऽपि संभवः।। 13 ।।

भवेत्प्रतिज्ञा सफला यथा विधेः
तथा करिष्ये कवचाभियाचनम्।
स तेन हीनः ससुतो निपात्यते
त्वया रणेऽसौ विजितो भविष्यति।। 14 ।।

बभौ स विष्णुः कवचस्य याचकः
ददौ सपुत्रो नृपतिश्च विष्णवे।
न दानवीराः परिलभ्य याचकं
मृतिप्रदानेऽपि विचिन्तयन्त्यलम्।। 15 ।।

गतोऽथ वैकुण्ठमनादिवन्दितो
युयोध रामोऽत्र दिनानि सप्त वै।
ममार वीरं युधि पुष्कराक्षकम्
सपुत्रमेवं कवचं बिना रणे।। 16 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स कार्तवीर्य्यार्जुनभूमिपालको
निशम्य तां वीरगतिञ्च वीरयोः।
सुवर्णजं स्यन्दनमास्थितो गृहात्
समाजगामाशु रणाय दुर्मदः।।17।।

विशारदा युद्धकलासु तत्सुताः
शतं समेत्याययुरुद्धता गृहात्।।
पितुर्निदेशात्सह सेनया च ते
पुरः स्थिता भार्गवसूनुसंगरे।।18।।

शरान् करे पञ्च शतञ्च दक्षिणे
शरासनान् पञ्च शतञ्च वामके।
विगृह्य रामं स विजेतुमुद्यतः
ततः सहस्त्रार्जुनभूपती रणे।।19।।

यथाचलेन्द्रोपरि मेघवर्षणम्
तथैव रामोपरि बाणवर्षणम्।
व्यधात् सहस्रार्जुनभूपतिस्तदा
समादृतस्तेन भृगूत्तमो रणे।।20।।

प्रहार–विक्षेप–लघु–क्रमेण तौ
प्रचक्रतुर्युद्धमतुल्यदर्शनम्।
स हैहयेशोऽपि सु–लोमहर्षणम्
चकार रामं प्रति घोरमाहवम्।।21।।

परश्वधेनैव स भार्गवोत्तमः
चकर्त्त शस्त्रास्त्रसमूहमुल्बणम्।
नृपो दधे व्रह्मकृतं महास्त्रकं
वधाय रामस्य रणाजिरे रुषा।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स सर्वशस्त्रास्त्रधरो महाबली
प्रयुक्तवान् दिव्यतमं महास्त्रकम्।
तथैव चाचम्य नृपेऽक्षिपत्प्रभुः
तदेव चास्त्रं रणमूर्धनि क्रमात्।।23।।

नभस्तले चण्डरविप्रकाशकौ
महास्त्रकौ संज्वलयन् स्थितौ जगत्।।
प्रतापिताश्चार्कसहस्रभानुभिः
त्रयोऽपि लोका भुवनैः सहानिशम्।।24।।

विलोक्य रामो जगतो विनाशनम्
जगन्निवासोक्तिमथास्मरत्तदा।
मयाऽस्य रक्षा परमांशधारिणा
महाविनाशस्य विधातुमिष्यते।।25।।

इति व्यवस्याशु भृगूत्तमस्तदा
निपीतवान् नेत्रयुगेन विस्तृतम्।
महोग्रतेजश्च महास्त्रसंभृतम्
क्षणस्थितो ध्यानगतो निषूदनः।।26।।

भृगूत्तमध्यानमहानुभावतो
महास्त्रयुग्मं विगतप्रभावकम्।
बभौ पपातावनिमंडले स्फुरद्
जयेति देवा गिरमूचुरुत्स्मयाः।।27।।

समुद्भवस्थाननिरोधकारकः
प्रभुर्महीयान् जमदग्निसंभवः।
निजप्रभावादखिलास्त्रसांन्त्वनम्
रिरक्षयाऽयं जगतश्चकार ह।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पुनः प्रवृत्तं तुमुलं महाहवे
रणार्णवे हैहयवंशकेतुजम्।
वधाय रामो जगृहे शरद्वयम्
न्यधादलं चापगुणे निषङ्गतः।।29।।

नृपस्य चूड़ामणिमेव कर्तितुं
श्रुतिद्वयं लक्ष्यगतं चकार सः।
चकर्त्त राजाऽपि निकृत्तकर्णकः
विनिर्जिताशेषजगन्नृपो बभौ।।30।।

अमन्यतायं नृपतिस्तिरस्कृतम्
प्रणष्टवीर्यं भृगुनन्दनेन यत्।
क्षणेन वैवर्ण्यमभूत्तनोश्च
बभौ गतश्रीकमिवास्य दर्शनम्।।31।।

सुदीनचित्तो नृपतिर्विलक्ष्यते
स्थितस्तदा लेखगतः सुचित्रवद्।
जयाभिलाषी च दशाननाज्जयं
विचिन्त्य संमीलितलोचनो बभौ।।32।।

पुनः पुनश्चात्रिकुलप्रदीपकम्
नृपोऽस्मरत् दत्तगुरुं रणाजिरे।
विपत्समुद्रे विनिमज्जिता नराः
स्मरन्ति नूनं निजकष्टमोचकम्।।33।।

प्रभावतो यस्य गुरोर्धरागतान्
तिरश्चकारायमशेषलोकपान्।
हृदि स्मृताद् ध्यानपराज्जपादयो
न दत्तदेवस्य बभूव दर्शनम्।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मुहुर्मुहुर्ध्यानजपादिकर्मणा
नचात्रिसूनुर्ददृशेऽस्य सम्मुखम्।
प्रखिद्यमानो धरणीपतिस्तदा
भृशं निराशः प्रबभूव जीवने।।35।।

समन्त्रकं दत्तगुरोःसकाशतः
करागतं शूलमिषेण भार्गवम्।
निहन्तुमिच्छन्नथ चाक्षिपद्रुषा
बलेन पूर्णेन स हैहयाधिपः।।36।।

नृपस्य शूलं भृगुवंशजन्मनः
पपात मूर्ध्न्याकुलितश्च विव्यथे।
हरिं स्मरन् युद्धगतो विमूर्च्छितो
भयाकुला देवगणास्तदा बभुः।। 37।।

समागता ब्रह्महरीशसंयुताः
सुराश्च शंभुं स्तुतिभिः समीरयन्।
शिवोऽपि रामं समबोधयत्तदा
क्षणेन सञ्जीवनि–विद्यया स्वया।।38।।

सचेतनो देवगणान् पुरः स्थितान्
ददर्श विध्यादिसुरत्रयं तदा।
ननाम तान् भक्तियुतोऽथ भार्गवः
स्तुतिं विगृह्याशु सुरास्तिरोहिताः।।39।।

विदूयमानो नृपतिः स्वदुःखतो
बभूव शोकेन युतो मुमोह च।
प्रयाहि मा शोकमतिं महीपते!
जगाद रामोऽखिलतत्त्वदर्शकः।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


महानुभावा न कदापि चिन्तिता
भवन्ति शूरा रणदुर्मदास्तथा।
अहं स एवास्मि विनाशितुञ्च ते
पुरः स्थितो योऽभवमादिसर्गके।। 41।।

विषादचर्चा समरे भवादृशाः
कदापि कुर्वन्ति न धीरबुद्धयः।
भुनक्ति लोकत्रयमात्मकृत्यजं
शुभाशुभं दैवकृतं विपाकतः।। 42।।

न कोऽपि चान्योऽस्ति शुभाशुभस्य ते
विपर्ययं कर्तुमलं महीपते।
सुपुण्यमासीद् बहुजन्मसंचितं
त्वयि स्थिता दत्तगुरोः कृपाऽपि च।। 43।।

इहार्जितस्याद्य च दुष्कृतस्य यत्
फलं प्रभुङ्क्ष्वावनिपाल! तत्कृतम्।
गुरुर्विमत्यापकृतस्त्वया यतो
मया कृतं कर्णनिकृन्तनं ततः।। 44।।

रणेऽथ लम्बोदररूपतोऽनिलः
समाययौ तूर्णमुवाच भार्गवम्।
शिवानुभावादमृतस्य वर्तते,
हृदि स्थितं कुण्डमथास्य भूपतेः।। 45।।

हृदोऽस्य यावन्न भवेद् विदारणम्
मृतिर्नतावत्कृतवीर्यजन्मनः।
निशम्य रामो हृदि चाक्षिपच्छरं
प्रशोषितो येन सुधारसः क्षणाद्।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रचिच्छिदे बाहुसहस्रमाशुकृत्
परश्वधैकेन नृपस्य वेगतः।
द्विधाऽकरोद्देहमथास्य मध्यतः
मृतोऽपतद्भूधरवत्तदाऽर्जुनः।। 47।।

तपो यशो दानमशेषमुच्छ्रयम्
शिवानुभावोऽपि च दत्तसेवनम्।
महाग्निरक्षाऽतिथिपूजनादिकं
नृपे हते सत्यखिलं क्षयं गतम्।। 48।।

स नर्मदोपासनतत्परोऽनिशम्
सुनर्मदो भूमिसुरादितोषणे।
न नर्मदोऽभूदथ विप्रघातनम्
न कर्मभोगाद् विरतिः श्रुता क्वचिद्।। 49।।

स कोपहीनो जमदग्निभूसुरः
तपोरतः धेनुमुपासतेऽनिशम्।
वने सशिष्येऽवसदन्वयान्वितः
निहत्य तं सर्वमनाशयद् नृपः।। 50।।

सहस्रवाहुं विनिहत्य भार्गवो
ननाम दिव्यामथ नर्मदां मुदा।
इयेष कैलाशपतिं प्रणम्य सः
स्ववृत्तमाख्यापयितुं त्रिशूलिने।। 51।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये कार्तवीर्यवधो नाम विंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# एकविंशः सर्गः

विजित्य नर्मदान्तिकं महेश्वराधिपं प्रभु
श्चकार नर्मदाजलेऽभिषेकमस्मरच्छिवम्।
ममाह नर्मदेश्वरं महेश्वरं महेश्वरे
दिदृक्षया शिवं ततो हिमालयं चचाल सः।।1।।

हिमालयोत्तरेऽलकामतीत्य नन्दिरक्षितं
ददर्श पर्वतेन्द्रतुंगश्रृंगशंकरालयम्।
प्रविश्य धामरक्षकानुमोदितोऽपि भार्गवो
व्यलोकयद् गणेश्वरञ्च देववाहिनीपतिम्।।2।।

प्रणम्य शंभुसंभवौ गणेशकार्त्तिकेयकौ
प्रयातुमन्तरुद्यतो बभौ परश्वधायुधः।
क्षणं वितिष्ठ मा प्रयाहि चाग्रतो गणेश्वर–
स्तमब्रवीच्च भार्गवं विनिद्रितावुमाशिवौ।।3।।

तयोर्विगृह्य सूचनामहं प्रवेष्टुमद्य ते
करोमि शासनं न याहि साम्प्रतं गृहान्तरम्।
रहस्यमासनस्थितं गुरुं नृपं च जन्मदं
न दर्शनं शुभं कदापि लोकशास्त्रनिन्दितम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सहस्त्रबाहुकार्तवीर्यजाश्च पल्लवाः शकाः
सुचन्द्र–कोशलेश–कान्यकुब्ज–कम्बुजादयः।
शिवानुभावतो मया विनिर्जिता रणाङ्णे,
गुरुं प्रणम्य यातुमुत्सुकोऽस्म्यहं गृहं स्वकम्।।5।।

विकारभावसंभृताञ्च कामिनां निदर्शनम्
कथं करोषि मे विकारवर्जितस्य तच्छिशोः।
त्वया मृषाविजल्पनं सहासमुच्यतेऽथवा,
गणेश! दर्शने पितुर्न मेऽस्ति वारणं क्वचित्।।6।।

इतीरयन् गृहान्तरं प्रवेष्टुमुद्यतो बभौ
गणाधिपेन वारितोऽथ वाक्ययुद्धमारभत्।
करग्रहं विकर्षणं मिथस्तयोः प्रकम्पनम्,
पृथक्कृतौ च कार्तिकेयबाहुभिश्च तावुभौ।।7।।

विगृह्य बाहुयुग्मकं गणाधिपश्च भार्गवम्
प्रकम्पयन् विदिक्षु दिक्षु चालितं समन्ततः।
पराभवावमाननं विचिन्त्य कोपकम्पितः
प्रचिक्षिपे परश्वधं गणाधिपे स भार्गवः।।8।।

अमोघतां विचिन्त्य तस्य शंकरायुधस्य तम्
दधार वामदन्तके कुठारकर्तितोऽपतत्।
विलोक्य भूतले महारवो बभूव पश्यताम्,
हहाकृतं सुरैर्नरैश्च कार्तिकेन भीषणम्।।9।।

उमाशिवौ समागतावुभौ निशम्य तं ध्वनिं
ह्यपश्यताञ्च वक्रतुण्डमेकदन्तिनं तदा।
अपृच्छदाशु पार्वती मयूरवाहनं रुषा
सकारणं बभाण सोऽपि भार्गवाग्रतोऽखिलम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जगाद शंकरं शिवा रुषाऽतिवत्सलान्विता,
प्रभो! त्वयाऽभिरक्षितं नृपं तमर्जुनं मृधे।
त्वयाभिरक्षितो विजित्य भार्गवोऽथ दत्तवान्
सुतस्य दन्तकर्त्तनान्विता च ते सुदक्षिणा।। 11।।

प्रभो! सुशिष्य एष तेऽद्य रोचतेऽथ पुत्रवद्
प्रसाधयिष्यतीच्छितान्यशेषभावितानि ते।
गृहेऽत्र रक्ष शिष्यकं प्रयातुमुद्यताऽस्म्यहम्
पितुर्गृहं सपुत्रकं न चात्र वस्तुमुत्सहे।। 12।।

शिवेरितं शिवो निशम्य नोक्तवान् प्रियाप्रियं
शिवान्तिकं ययौ भृगूत्तमो विनीतकंधरः।
पदान्तिकानतं विलोक्य पार्वती तुतोष नो
यदाऽतिदुःखितो बभौ कुठारधारकः प्रभुः।। 13।।

प्रसादयन् गिरा प्रियामुवाच शंकरस्तदा
नगेन्द्रजे मयंकनिन्दितानने सुरैर्नुते।
इमञ्च शिष्यकं पदानतं कृतागसं शिवे
क्षमस्व हस्तपंकजेन बोधयस्व भार्गवम्।। 14।।

अजानताऽपि दुष्करं कृतञ्च तेन रोषतो
जयानुशंसनार्थमेव मां दिदृक्षयागतः।
शरण्यताप्रदे पदानतं शिशुं प्रसादयन्
वरं प्रदीयताञ्च भार्गवाय सत्कृपाङ्कुरु।। 15।।

विनायकोऽधिनायकोऽभयश्च कोपवर्जितो
न तस्य कामभावनाऽपि बाधतेऽतिदुष्करा।
सदाद्यपूजितः सुरैर्जनैः स्तुतो भुवस्तले
भविष्यतीह चैकदन्तनामतः सुतोऽप्यतः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रियोऽद्य विष्णुरेष भार्गवो गतोऽस्ति शैवतां
शिवात्मजोऽपि वैष्णवो भविष्यतीह ते सुतः।
हरेः शिवस्य भेदताऽपि निःसृता भविष्यति
प्रसीद देवि भार्गवे दयां विधेहि साम्प्रतम्।। 17।।

उमाऽश्रृणोद्यदा प्रसन्नतामगात्क्षणान्तरे
मुदान्विताऽकरोत्स्वमङ्कमध्यगं च भार्गवम्।
वरं ददौ च सिद्धताविधौ हृदाऽऽलिलिङ्ग तं
गणाधिपस्य भार्गवस्य मित्रता प्रवर्तिता।। 18।।

त्वया बलेन तेजसा दयालुता यशस्कता
सुरक्षिता च योगयुक्तता सुबोधशालिता।
यथा भवेत्तपोविधानमुत्तमं त्वया कृतं
तथा विधेहि सर्वदा न सिद्धिवञ्चितो भव।। 19।।

तपश्चर प्रभो व्रतैर्यमैश्च कर्षयन् तनुम्
फलानि शाकमूलपुष्पकानि भक्षयन् सदा।
द्विरेकवर्षकालिकस्तपो यदाऽऽचरिष्यसि
नृपान्वयान्तजाऽघनाशता तदा भविष्यति।। 20।।

न वंशनाशनादघाद्धि मोचनं तपो बिना
न शत्रुवंशनाशनं विना च शान्तिरेति ते।
न वा पितुर्वधापकारिणो निहत्य चेच्छमः
कुरुष्व मासमासिकं तपोऽघशान्ति हेतुकम्।। 21।।

पितुर्वधोपजातकोपजातशत्रुनाशनम्
कृतन्तपोधनान्वयोद्भवोऽपि रक्षिणां व्रतम्।
तथापि कोपकारणाद् हतिःकृताऽघकारिणी
महीसुरस्तपस्यया करोति निर्मलं वपुः।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वमातुरग्रतःकृता च दुःखितां विलोक्य या
तया प्रतिज्ञया भृगूत्तमोऽकरोन्महीपतेः।
कुमार्गयायिनोऽथ वंशनाशनं तथाकृतम्
तपःप्रतप्तुमुद्यतोऽभवच्छिवाज्ञया पुनः।।23।।

प्रणम्य पादयोर्विगृह्य चाशिषं शिवानुगः
शुभाश्रमं ययौ पितुर्हतिं विचिन्तयन् पथि।
विलोक्य दुःखकर्शितां स्वमातरं नताननो
भृशं रुरोद भार्गवोऽथ संस्मरन् क्षणे क्षणे।।24।।

कुलागतञ्च वोधवैभवं पितुः स लब्धवान्
सगोत्रता भृगोरथाद्य येन चार्पिता तनौ।
विशिष्टता वरिष्ठता तपोभिरास्थिताऽनिशं
मयि प्रकल्पिता च येन सोऽद्य जन्मदो हतः।।25।।

वधादशेषभूभुजाममर्षशान्तिरिच्छिता
न लप्स्यते न चाप्तिरद्य मे पितुर्भविष्यति।
मयि स्थिते हतो पितेति मानसं दुनोति मे
वृथाऽस्ति मे पराक्रमश्च वीर्यमुल्वणं मृषा।।26।।

वहिष्कृतश्च कोप एव मे वशी पिता तदा
तपस्यया शमाय यत्नवानभूच्च केवलम्।
गृहागतातिथेश्च पूजनं चकार तेन यत्
तथापि हिंसितो विमार्गगामिभिर्नृपैः पिता।।27।।

यदाऽतिथिश्च देवता भवत्यशेषभारते,
सुपूजितः शुभत्वमेति धारणा पितुः शुभा।।
निजाश्रमे सुपालिता तथापि संस्कृतिर्हता,
मुनिर्हतश्च धेनुसंस्कृती हतेऽरिभिस्तदा।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्खलद्वचांसि कण्ठरोधजानि शोकजान्यलं
निशम्य चात्मजस्य रेणुका भृशं विमोहिता।
मुहुर्मुहुः पतिं विचिन्त्य शौर्यमीप्सितन्तथा,
मुमोह सा बुबोध वीक्ष्य भावविह्वलं सुतम्।। 29।।

विलोक्य रेणुका तपस्विनी रुदन्तमात्मजम्
कथाभिरेव शोकनिर्वृतिं चकार मोहतः।
बभाण पुत्र! ते पितुः क्रियौर्ध्वदैहिकी भवेद्
यथाऽत्रिसूनुमन्त्रतस्तथा विधेहि मा चिरम्।। 30।।

प्रकर्तुमौर्ध्वदैहिकं निजाश्रमाद्बहिस्ततो
गतोऽत्रिपुत्रकाश्रमं शुभञ्च सह्यपर्वते।
विधातुमन्त्यकर्म सःपितुर्निशम्य खे गिरम्
सुदत्तमन्त्रतः समुद्यतश्च रेणुकात्मजः।। 31।।

नत्वा शिवां शिवमसौ जमदग्निसूनु
मैत्र्या प्रसाद्य च विनायकमेकदन्तम्।
भूयः समेत्य जननीं पितुराश्रमस्थां
दत्ताश्रमं प्रतिं चचाल पितुः क्रियार्थम्।। 32।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये गणपतिसख्यं नाम एकविंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# द्वाविंशः सर्गः

जननी सहितः समाययौ
सह देहेन पितुश्च भार्गवः।
प्रविलोक्य वरासनात्तदा,
सहसोत्थाय चचाल चात्रिजः।।1।।

उपगम्य ननाम पादयोः
जमदग्नेः पत्न्याः कृतांजलिः।
समुवाच सगद्गदो मुनिः
सुरवन्द्ये ! जगदम्ब! ते नमः।।2।।

भवसिन्धुगतान् जगत्त्रये
जननि! त्वं सुलभाऽसि तारणे।
दययैव च योगिदुर्लभे!
बहुरूपान्तरिते! च ते नमः।।3।।

प्रणिपत्य च रेणुकां ततो
जमदग्नेः शवमेत्य पादयोः।
प्रणनाम च राममुक्तवान्
कुरु संस्कारमलं मयेरितम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रियतां भृगुवर्य ! साम्प्रतं
ह्यभिषेकं खलु सर्व तीर्थजम्।
अनुभूय शुचिं विधित्सुना
करणीयं पितुरौर्ध्वदैहिकम्।।5।।

धनुषीषुमशेषधर्मभृद्
विदधे तेन शरेण सह्यकम्।
विददार च सर्वतीर्थजे
सलिले परिसस्नौ शुचिर्बभौ।।6।।

यमुना द्युनदी सरस्वती
ननु गोदावरि – सिन्धु – नर्मदाः।
सरितो रभसात्सकृष्णकाः
शरमार्गेण च राममन्वयुः।।7।।

मथुराऽवधकाञ्चिकाशिकाः
सदवन्ती च पुरी गयादयः।
द्रुतमाययुरन्तिकं भृगोः,
सु–कुरुक्षेत्र प्रयागपुष्कराः।।8।।

बहुतीर्थजलैस्तदा मुनिः
ह्यभिषेकमथोत्तमं व्यधात्।
जनकस्य विधातुमन्तिमं
भुवि सत्कर्म बभूव सज्जितः।।9।।

स्वगृहे सवितुः समागमे
हवनैस्तृप्तहुताशनस्तदा।
जमदग्निमुनेर्गवेऽर्पितम्
तनुमादातुमहो प्रतीक्षते।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तपसा परिपूतमात्मनः
पितुरादाय तनुं च तीर्थजैः।
सुजलैरभिषेचयन्मुनिः
मरणादुत्तरकर्म साधितुम्।। 11।।

बहुचन्दनकाष्ठ वर्द्धित
स्तुलसीदारुभिरर्चितोऽनलः।
पवनैर्व्यजनायितैस्तदा
खलु दत्तात्रयमंत्रपूरितः।। 12।।

रसनाभिरशेषवीक्षितैः
ज्वलितैर्गौरविभूषितैःकरैः।
यशसा ज्वलनोज्ज्वलान्वितं
परिहर्तुं चकमेऽनलो वपुः।। 13।।

परितोष्य सदाऽग्निहोत्रकैः
स्तुतिमंत्रैः स्वगृहे दिने दिने।
यमपूजयदेष भार्गवः
स हुताशोऽपि तनुं प्रतीक्षते।। 14।।

मुनिनाऽत्रिसुतेन शासितो
विधिमंत्रोद्गिरणैः समाहितः।
विचकार तदौर्ध्वदैहिकम्
जमदग्नेः स्वपितुर्मुनिः प्रभुः।। 15।।

भुवि पावयितुं पवित्रतां
प्रथितिर्यस्य स एव पावकः।
पुरुहूतममुं दिवंगतं
मुनिमुद्दिश्य तनुं प्रतीक्षते।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शुचिकाष्ठसमेधिता चिता
शुभगन्धैश्च वने विनिर्मिता।
मुनिदेहमधारयत् शुभं
समदादग्निकणान् तदा मुनिः।। 17।।

सुचितास्थितमाननं पितुः
प्रविलोक्याचरदाशु चान्तिमाः।
ज्वलनार्पणपूर्वमुन्मनो
नतिपूर्वाश्च तदा प्रदक्षिणाः।। 18।।

भृगुनन्दनसम्मुखागता
सुसमिद्धे च चिताहुताशने।
पुरतोऽत्रिसुतस्य मोहिता
निगदन्ती वचनानि रेणुका।। 19।।

निजगाद च राममाश्रिता
सुत ! भर्त्रा सह यातुमुत्सहे।
परिपाहि गुरून् द्विजान् सुरान्
तव माता पतिमाप्तुमिच्छति।। 20।।

पतिरेव गुरुः स्त्रियः स्मृतः
पतिहीनं भुवि जीवनं वृथा।
परलोकगते पतौ प्रभो,
ननु मां प्रापय चान्तिकं मुनेः।। 21।।

क्षणमप्यहमद्य तं विना
सुतमावस्तुमलं भुवस्तले।
न कदापि भवामि चोत्सुका
नय मां यत्र गतश्च ते पिता।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

मरणोत्तरकर्म संस्कृतिम्
गुरुदत्तात्रयशासनात् तदा।
सुर–किन्नर–सिद्ध–साधवो
ह्यनुजग्मुः प्रणता विलोकितुम्।।23।।

मिषतां सुर–सिद्ध–धीमताम्
प्रविवेशार्चिषि सा पतिव्रता।
पतिधर्मपरायणा सती
सुरवन्द्या किल रेणुका क्षणात्।।24।।

जनकोऽप्यरिभिर्विहिंसितः
विलपंती जननी गता पतिम्।
प्रविलोक्य विहाय धीरताम्
विलुठन् सोऽथ रुरोद भार्गवः।।25।।

जनिता जनको न दृश्यते
यत आस्ते मम गात्रसंभवः।
परिबोधयितुं न मे क्वचिद्
गुरुरद्यास्ति तिरोहितो मम।।26।।

मयि मोहपरायणोऽनिशम्
लघुपुत्रेऽप्यधिकश्च वत्सलः।
अनुशासनमेव पालितम्
क्व गतो यस्य विलोक्यते न सः।।27।।

धन–कोश–विभूति–वैभवम्
कुल–संभूति–समृद्धि शासनम्।
पितरं प्रविहाय सर्वथा
ह्यधिगन्तुं भुवने च शक्यते।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पितरो विलसन्तु सर्वदा
बहुजन्मन्यपि संसृतौ सदा।
जनिता न च केवलं लभेत्
मरणान्ते जमदग्निभूसुरः।। 29।।

शिशुकालतयाऽपि मां च यः
शिवमाराधयितुं समादिशत्।
कृपयैव परश्वधायुधं
भुवनं जेतुमथास्ति मेऽन्तिकम्।। 30।।

मयि जीवति मे पिता मृतो
न हि दुःखाय ममास्ति केवलम्।
सुरभिं प्रति तैर्नृपाधमैः
जनको मेऽद्य हतः प्रबाधते।। 31।।

अयि! दारुणकर्म निष्ठुर !
न विधे! मां त्वमथो विमुञ्चसि।
निहते जनके तपस्विनी
मम माताऽपि दिवं गता क्षणात्।। 32।।

भुवनेऽत्र कनिष्ठपुत्रके
जननीनां ममता विलोक्यते।
मयि मोहपरायणाऽनिशम्
जगदम्बा मम सा न दृश्यते।। 33।।

यदि मे पितुराज्ञया क्वचिद्
कृतमत्याहितमेव साऽस्मरत्।
न च तन्मम दारुणं क्वचित्
कुलरक्षाविषयं विचिन्तयन्।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


निहते मयि भार्गवान्वयो
जगतो लोपगतिं गमिष्यति।
इति चिन्तितवानहं तदा
गुरुवाक्यानुसृतिर्मया कृता।। 35।।

जगदम्ब! विहाय मामितो
यदि वासोऽभिमतो दिवि त्वया।
अहमप्यनुयामि साम्प्रतम्
न वसाम्यत्र बिना त्वया भुवि।। 36।।

बल वीर्यमिदं तनौ मम
तव वात्सल्यतया विराजते।
तव शक्तिरिह स्थिता मयि
क्षणमप्यत्र न मे त्वया बिना।। 37।।

रमणीयमिदं सुशोभितं
मुनिवृन्दैरपि जुष्टमुत्तमम्।
गुरुणाऽत्रिभवेन शासितम्
न हि सह्याचलमम्ब रोचते!।। 38।।

विगते त्वयि सर्वमप्रियम्
जगदेतज्जगदम्ब दृश्यते।
क्व गताऽसि विहाय मां सुतम्
नचिरान्मेऽक्षिगता भवाद्य भो!।। 39।।

वचनानि निशम्य रेणुका
सुतवात्सल्यतयाऽऽगता पुरः।
चरणावुपगृह्य भार्गवः
सलिलैर्नेत्रभवैः समार्चयत्।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


विगता मम सोदराः पिता
भुवने त्वां हि विहाय कोऽस्ति मे।
अनुचिन्त्य सुरार्चिते! त्वया
करणीया वसतिर्ममान्तिकम्।। 41।।

वचनानि निशम्य सा क्षणात्
सुतमुत्कंठितमाश्वसान्त्वयत्।
समुवाच श्रृणोतु पुत्रक !
भवितारो वचनानि मेऽमृषा।। 42।।

यदि राम! करोषि मे स्मृतिम्
सततं त्वामभिपद्य तत्क्षणम्।
चिरजीवनतोऽहमात्मनो
निवसिष्यामि सदाऽन्तिकं च ते।। 43।।

परशुं स्वकरे वहन् सदा
निवसिष्यस्यपि चेद् गणेश्वरो।
त्वमिहापि च रक्षितुं मुदा
तदहं पुत्र! भवामि चाश्रमे।। 44।।

एवं निशम्य जननीवचनं स रामो
मातुः स्मृतौ सपरशुः सततं समीपे।
सह्याद्रिगो वसति भक्तजनानुकम्पी
सा रेणुका जयति चाथ भृगूत्तमोऽपि।। 45।।

एवं प्रतोष्य जननीं पितुरौर्ध्वकर्म
सम्पाद्य दत्तगुरुमेत्य ननाम मूर्ध्ना।
पूर्वव्रतानुकरणाय शिवप्रसादाद्
लेभे त्रिलोकविजयं कवचं पुरारेः।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


शास्त्राणि भूरि पठितानि विचारितानि
शस्त्राणि युद्धभुवि चापि परीक्षितानि।
रामेण प्रेतकर्माणि पितुः कृतानि
चक्रे मतिं च यजनाय भृगूत्तमः सः।। 47।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन विरचिते भार्गवीये जमदग्निसंस्कारो नाम द्वाविंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# त्रयोविंशः सर्गः

शस्त्रद्युतिः परशुराममुनिर्धरित्रीम्
निःक्षत्रियामकृत चापि त्रिसप्तकृत्वः।
पापानुगान् सततदारुणकर्मशीलान्
भूपान् ममार निजसंस्कृतिरक्षणाय।।1।।

ये क्षत्रिया भुवनपालनकर्महीना
भोगे रता न जनरंजन कर्मदक्षाः।
गा भूसुरान् मुनिगणानथ घातयंति
ते मज्जिताः परशुरामकुठारतीर्थे।।2।।

ये भूपतित्वमधिगम्य विलासिनोऽपि
सद्यः प्रजाहितमलं न विचिन्तयन्ति।
ते शासितुं नहि भवन्ति कदापि योग्या
स्तीर्थीकृतम् सपदि तैर्भृगुशस्त्रतीर्थम्।।3।।

ये दुःखितानिह कदापि न पालयंति
राज्ये प्रजाजनकथामपि न स्मरन्ति।
सत्यानुपालनरता न भवन्ति भूपा
स्ते चायुधार्चिषि हुता भृगुनन्दनस्य।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



संरक्षितोऽभवदयं विपिने शिवाख्यो
गोभिर्बभौ भुवि स गोपतिनामधारी।
गोष्ठे प्रतर्दनसुतः परिरक्षितोऽभूत्
वत्सैः स वत्स इति नामतया प्रसिद्धः।।5।।

पुत्रो विडूरथभवः पुरुवंशजन्मा
ऋक्षैर्विवर्द्धिततनुश्च महीधरर्क्षे।
सौदासजोऽपि मुनिनाऽथ पराशरेण,
संरक्षितोऽभवदशेषतया प्रहारात्।।6।।

गंगातटे मुनिवरेण च गौतमेन
संरक्षितो दिविरथप्रभवः कुमारः।
अंगो वृहद्रथनृपश्च सुरक्षितोऽभूद्
गोपुच्छकैर्भुवि गिरावथ गृध्रकूटे।।7।।

वंशे मरुत्तनृपतेस्तनया वसोश्च
वीर्ये मरुत्पतिसमास्त्रय एव शिष्टाः।
संरक्षिताश्च कृपया भुवि सागरस्य
नान्ये नृपा भृगुपतेरभिरक्षिताः स्युः।।8।।

केचित्पराशरमुनेः कृपयावशिष्टाः
केचिच्च गौतममुनेः कृपयाऽऽविताश्च।।
ऋक्षैश्च गोभिरविता भुवि सागरेण
शिष्टाश्च राजकुलजा खलु रामकोपाद्।।9।।

कृत्वा च दस्युरहितां वसुधां समन्ताद्
रामो रराज वचनानि विधाय पूर्णम्।
सन्तर्पिताश्च पितरो रुधिराम्भसैव
गर्त्ताःपितुर्हतिकरैः समपूरयञ्च।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रीता बभुश्च पितरोऽथ पितामहाश्च
प्रोचुश्च राममितौजसमुग्रवीर्यम्।
भो ! पुत्र ! विक्रमतया तव पूर्वजानां
भक्तिः स्थिरा वरय वाञ्छसि यस्त्वमद्य।। 11।।

वीर्यं प्रकाशयितुमेव कृताः सुगर्त्ता
रक्तान्विता भुवि जनैः प्रथिताः सदैव।
रामह्रदेति भवितार इमे प्रसिद्धाः
राजा न कोऽपि भविता भुवि विप्रहन्ता।। 12।।

पितॄन् प्रणम्य शिरसा जमदग्निसूनुः
प्रेम्णा तदा वरमयाचत स्वर्गतांस्तान्।
प्रीता भवन्त इह चेन्मयि नाथवन्त
स्तत्पावयंतु सुतरां तपसा सुतं माम्।। 13।।

क्षत्रान्वयान्तकरणान्मम रोषजातम्
पापं यदस्ति विगतश्च भवामि तेन।
युष्माभिरद्य तपसा नवतेजसाऽपि
युक्तो भवेयमिति तत्कृपया विधेयः।। 14।।

सन्तर्पणाय भवतां रुधिरस्य गर्त्ताः
संपूरिता खलु मया पितृनाशकानाम्।
तीर्थं भवत्वलमिदं भुवने प्रसिद्धम्
रामह्रदाश्च भुवने प्रथिता भवन्तु।। 15।।

भक्त्या नतं परशुराममथोचुरस्य
हर्षेण मोदभरिताः पितरस्तदानीम्।
त्वं भार्गवेन्द्र ! कृतवानसि घोरकर्म,
नान्यैश्च दुष्करमिदं क्रियते कदापि।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



हत्वा रिपुं स्वपितुरेव कुलेन सार्द्धम्
राजानमर्जुनमपूरय आत्मवाक्यम्।
सन्तर्पिताः पितृगणा अखिलास्त्वयाऽद्य
जातोऽसि राम! भृगुवंशमणिप्रदीपः।।17।।

सम्पूजिताः स्म मुदिताश्च वयं तथापि
नाक्षय्यमस्य फलमद्य भविष्यतीति।।
राजन्यवंशनिधनं त्यज मुञ्च रोषं
धर्मं विधेहि निजचित्तविशोधनार्थम्।। 18।।

हे ! वीर ! भार्गव ! कृता बहु वीरहत्याः,
लोके त्वया त्यज पितुर्वधरोषभावम्।
भूयस्तपोऽनुदिनमाशु विवर्द्धतां ते,
रामह्रदाः प्रभविता भुवि तीर्थभूताः।। 19।।

जग्राह पूर्वपुरुषोक्तिमतन्द्रितः सन्
रामो ययौ सपदि सिद्धवनांश्रमान्तम्।
धर्मव्रती न्यवसदव्यमितं यमेन,
विप्रैः समं परशुराम मुनिस्तताप।। 20।।

शास्त्रोदितं पितृगणाय च पिण्डदानम्
चक्रे वशी नियमतश्च गयामुपेत्य।
पिण्डक्रियाविधितया पितरोऽस्य तृप्ताः
जाता महीसुरगणा अपि दानपुष्टाः।। 21।।

दृष्ट्वा स्वमातरमथो पितरं नभःस्थम्
नत्वाऽब्रवीदहमहो सफलोऽस्मि चाद्य।
मातः पुरस्तव कृता च मया प्रतिज्ञा
या पूरिता तव पितुश्च कृपाप्रसादात्।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सा रेणुका निजसुतं व्रतिनं निरीक्ष्य
प्रावोचदाशु सुरभूसुरतोषणार्थम्।
यागं द्विजैः सह कुरुष्व च देहि धान्यं
पूर्वं हृतं धनमशेषतया द्विजेभ्यः।। 23।।

यज्ञं विधेहि सुत ! लोकहिताय दिव्य
माचार्यता ऽत्रितनयस्य गुरोर्विधेया।
युद्धे जितां वसुमतीमखिलां प्रदेहि
श्री कश्यपाय मुनये स्वमखे समाप्ते।। 24।।

रामः प्रगृह्य शिरसा निजमातुराज्ञाम्
भक्त्या समाह्वयत सर्वमुनीन् विधिज्ञान्।
रत्नैः सुवर्णरजतादिभिराहिताद्याम्
वेदीं चकार ललितां मुनिभिः प्रशस्ताम्।। 25।।

सत्तोरणैर्ध्वजपटैर्ललितैश्च दण्डैः
कुण्डैः सुवर्णकृतमण्डपपूजितैश्च।
विप्रैश्च वेदमुखरैर्भृगुवंशजैश्च
पूर्णा बभौ मखमही जमदग्निसूनोः।। 26।।

देवा मुनीन्द्रनिचया मखकर्मनिष्ठाः
क्षत्रान्तकस्य हयमेधमखस्य भूमिम्।
प्राप्त्यै समाययुरनुद्रुतचेतसश्च
दत्तात्रयेण परियाजितमीक्षणार्थम्।। 27।।

अध्वर्युरत्र यजने मुनिकश्यपोऽभूद्
श्री गौतमोऽभवदथास्य मखस्य गाता।
विश्वाद्यमित्रमुनिरत्र मखे च होता
ब्रह्मा मृकण्डुतनयोऽथ हि रामयज्ञे।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ये चाग्निवेश्यसहिता निगमागमज्ञा
यज्ञाङ्गकर्मनिचयान् किल चक्रिरे ते।
सर्वे द्विजा दिविभवा मुनयो नराश्च
सन्तर्पिताः परशुराममखे प्रदानैः।। 29।।

पूर्वां दिशं परिददौ मखहोमकर्त्रे
सद् ब्रह्मणे हितकृते समदाच्च याम्याम्।
अध्वर्यवेऽपि समदाच्च दिशं प्रतीचीम्
उद्गातृकर्मनिरताय तथोत्तराशाम्।। 30।।

ग्रामैर्वनैश्च नगरैः पशुपक्षिकीटैः
पूर्णाऽखिला वसुमती खलु सागरान्ता।
पूर्वं जिता मुनिवराय च कश्यपाय
दत्ता मुनिश्च जगृहे भृगुनन्दनाच्च।। 31।।

रामेण भार्गवकुलाब्धिसुधाकरेण
सन्तर्पणाय विजितां धरणीं पितॄणाम्।
श्री कश्यपाय च सुवर्णधनादिकञ्च
सम्यक् विभज्य महिदेवगणाय दत्तम्।। 32।।

धान्यं धनं वसुहिरण्यमयी समृद्धिः
भोगाय भूरि विभवाय भवन्ति राज्ञे।
विप्राश्च भोगविमुखास्तपसि प्रलीना
दत्वाऽखिलं भुवि तपोधनतां प्रयान्ति।। 33।।

पूर्वं यथैष जमदग्निसुतस्तपस्वी
कृत्वा सुयज्ञमपि सैष तथा बभूव।
रोषं विहिंसनमशेषनृपाधिनाशं
विस्मृत्य भार्गवमुनिर्मुनितां दधार।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भक्त्या विलोक्य सुतकर्म च राममाता
प्रादुर्बभूव मुदिता सपतिर्मखान्ते।
रामोऽपि वीक्ष्य पितरौ विजहर्ष भक्त्या
पाद्यादिभिः समभिपूज्य ननाम मूर्ध्ना।। 35।।

सिद्धाः सुरा मुनिवरा मखकारिणश्च
तत्रागतामभिननन्दुरशेषवन्द्याम्।
अङ्गैः सहात्र निगमाश्च विलिल्यिरे ते
काये च ये मखगता खलु रेणुकायाः।। 36।।

सम्प्रार्थिताऽत्रितनयेन जगद्विधात्री
वेदाय वेदजननी समदर्शयच्च।
मन्त्रान् स्वरेण सहितान् विकृतीश्च सर्वाः
दत्तात्रयाय यजने भुवि रेणुका सा।। 37।।

वेदास्तदा परशुराम मखावसाने
दत्तात्रयस्य पुरतोऽवभृथे सभायाम्
श्री रेणुकाननभवा बहिरेत्य सर्वे,
ब्रह्माननं निविविशुर्धृतविग्रहाश्च।। 38।।

लोकेऽभवज्जयजयेति रवस्तदानीम्
देवाश्च तत्र ववृषुः सुमनांसि हर्षात्।
रामः पितुश्चरणरेणुमवन्दताथो
मातुः पदान्तिकमुपेत्य ननाम मूर्ध्ना।। 39।।

दीप्तार्चिभिर्नवविभा भुवि रेणुकाया
व्याप्ताऽभवद् गिरमुवाच सुताय साऽपि।
लक्ष्मीर्हरेश्च धरणी भृगुन्दनस्य
सीता रघूत्तमकृते भवतीह सत्यम्।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सा रुक्मिणी यदुपतेर्विहितावतारे
संजायते परशुराम कृतेऽपि भूमिः।
श्रीः सेवितुं हरिमनुव्रतमानसाऽथ
सर्वावतारचरितेषु धृतावतारा।। 41।।

एवं समाप्य च मखावभृथाभिषेकं
मातुः पितुश्च चरणाब्जयुगं प्रणम्य।
रामोऽवसद् गिरिवरे च महेन्द्रनाम्नि,
शान्तस्तपोनिधिरयं तपसा बभासे।। 42।।

श्री पर्शुरामकृतयज्ञफलेन तत्र
पुण्येन चापि तपसाऽस्य पिता महात्मा।
सप्तर्षिमण्डलगतो विरराज भासा,
धन्यो मुनिर्विजयते जमदग्निवर्यः।। 43।।

सप्तर्षितामधिगतो भृगुवंशजन्मा
विज्ञाय नन्दितमना भृगुजाश्च सर्वे।
शस्त्रेण शास्त्रविभवेन पराक्रमेण,
रामो बभूव भुवने कुलपावनश्च।। 44।।

भार्गवः कृत्यशेषो बभौ स्वाश्रमे
संस्मरन् शंकरं भास्वरं भास्करम्।
भूमिभारं विजित्यापि भोगातिगो
नित्यमध्यापनादौ रतो भूतले।। 45।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये परशुराममखो नाम त्रयोविंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# चतुर्विंशः सर्गः

महेन्द्राचलेऽयं तपस्यन् कदाचित्
मुनिर्भार्गवोऽचिन्तयत्सुप्रभाते।
मया कश्यपायाखिला भूः प्रदत्ता
कथं दत्तभूमौ कृतघ्नो वसामि।।1।।

न दत्तावनिर्वासभूमिर्भवेन्मे
न विश्राणितेयं धरावासयोग्या।
मया न्यायरक्षा विधेयेह नो चेद्
तदा रक्षकः को विधेरत्र लोके।।2।।

इतोऽहं गमिष्यामि संत्यज्य भूमिं
सरिन्नायकान्तःस्थितां मार्गयिष्ये।
महेन्द्राचलस्याश्रमं संपरीत्य
प्रणम्याशु शैलाच्चचालाद्रिसारः।।3।।

अटन्देशजातानयं जामदग्न्यो
विचिन्वन् महीं स्वस्य वासाय लोके।
ययौ सह्यशैलं ह्यसह्यप्रभावो
ददर्शाब्धिमुद्यत्तङ्गावलीभिः।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्थितः सह्यसानौ समुद्रं समन्ताद्
विलोक्यापि रामो निवासाय भूमिम्।
न कुत्रापि दृष्ट्वा जलेशं समेत्य
जगादापसर्तुं परित्यज्य भूमिम्।।5।।

अये! वारिधे! ते जलान्तर्निवासम्
चिकीर्षुर्मुदा भार्गवश्चास्मि रामः।
स्वगम्भीरनादेन सिन्धुं बभाण
स्वरेणापि चोच्चैस्तदा ह्युग्रधन्वा।।6।।

प्रयाह्याशु सिन्धो! विहायावनिं त्वं
मया चाश्रमस्थापनं कार्यमत्र।
निवासाय लोकस्य सस्याय योग्या
भवित्री धराऽपासर त्वं हि दूरम्।।7।।

मया भूमिदानं कृतं कश्यपाय
विजित्यापि यज्ञावसाने च वित्तम्।
व्रतोपासनार्थं कथं विप्रभूमौ
निवासो विधेयस्ततो कामये त्वाम्।।8।।

न सामोक्तिमाश्रुत्य सिन्धुस्तदानीम्
दिनेऽस्तं गते ऽप्याययौ तस्य पार्श्वम्।।
विलोक्याशु तस्मिन् चुकोपाथ रामः
शरं संदधे चण्डचापे प्रहर्तुम्।।9।।

युगान्ते यथा शंकरः संजिहीर्षुः
प्रकोपेन लोकं तथा जामदग्न्यः।
वमन् वह्निधारां नभो मण्डलेभ्यो
निरीक्षन् दृशा शोणयाऽब्धिं जगाद।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अरे! सप्तसिन्धूनहं शोषयेयम्
सुमेरुं धरायामहं पातयेयम्।
धराव्यत्ययं चाप्यहं किं प्रकुर्याम्
तदण्डं विधातुःकिमास्फोटयेयम्।। 11 ।।

विचुक्रोश दीर्घं शितं बाणमेकं
चकाराशु चापेऽब्धिसंशोषणार्थम्।
ररासाद्रिमाला गुहा रोरवीति
वितत्रास वार्धिर्धरा चाचकम्पे।। 12 ।।

प्रचुक्षोभ चाण्डं विधे रामरोषाद्
सुराश्चासुरा मानवा भूरि भीताः।
धरामुक्तये सिन्धुमुत्सादनार्थं
लयौब्धिःप्रवृद्धो यदा भार्गवीयः।। 13 ।।

तदा सद्य एवाम्बुधिर्विप्ररूपो
विचार्य्यातिरोषान्वितं भार्गवं तम्।
विजानन् धिया प्रोच्चरन्नार्तवाण्या
प्रभो! पाहि पाह्यग्रतस्तस्य यातः।। 14 ।।

शरण्यं विनीतो ययौ प्राञ्जलिःसन्
तदा जामदग्न्यं नमन् वेपमानः।
सभीतोऽग्रतो राममेत्याह सिन्धुः
प्रभो! पाहि दीनं नमो भार्गवाय।। 15 ।।

त्वमेवं वदस्यद्य कोऽसीति दीनः
समुद्रोऽ नुपृष्टोऽभ्युवाचाथ रामम्।
प्रभो! मां कृतं चापराधं प्रविद्धि,
क्व रक्ष्योऽन्यतस्त्वां शरण्यं नमामि।। 16 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपेत्याथ ते सन्निधिं दीनबन्धो!
न दृष्टं प्रभो विक्रमस्ते कदाचित्।
मया यो बिलंबःकृतस्तत्क्षमस्व
सदा त्वां वरेण्यं शरण्यं च वन्दे।।17।।

प्रभो! दस्युराजन्यविध्वंसकारिन्
तपोभिश्च सप्तर्षितां दानशालिन्।
विजित्यापि दत्ता मही विप्रतायै
न जानेऽनुभावं नतोऽहं परेशम्।।18।।

गिरं निश्छलां सम्यगाश्रुत्य सिन्धो
र्मनाग् रोषमुक्तो बभौ जामदग्न्यः।
नतं वीक्ष्य चाब्धिं पदान्ते तदानीं
समाश्वासयत् दिग्जयी भार्गवेन्द्रः।।19।।

भयन्नैव कार्यं त्वया तोयराशे!
वधन्नैव पादानतस्यापि युक्तम्।
न शोषाय ते चेच्छरः पातनीयः
पुनः कुत्र संत्याज्य एषोऽस्त्यमोघः।।20।।

विनिर्दिश्य सिन्धुं शरो भूमिमध्ये,
निधायापसर्तुं ततश्चादिदेश।
धनुष्कोटिलग्ना मही सह्यपार्श्वे
स्थिता रामतीर्थाभिधा सिन्धुदत्ता।।21।।

जलेशान्तरादुद्गता वासभूमिः
सृता संस्कृता भार्गवेणाथ लोके।
जलेशं तदा प्राह संरक्षणार्थं
मुनी रैणुकेयः पुनर्वासभूमेः।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न च क्षुण्णमेतत् स्थलं रेखयाऽपि
त्वयाऽब्धेः प्रकर्तव्यमन्ते लयेऽपि।
भवेद्वायुना घूर्णनं वापि तोये
पदं रामदत्तं न चोल्लंघनीयम्।। 23।।

पुरश्चोर्ध्वतः पश्चभावादधस्ताद्
विदग्धं मया क्षेत्रमेतत्समन्ताद्।
शिवाग्निप्रभाभिः सुमन्त्रोक्षितश्च
स्वकीयैः कमण्डल्वपोभिस्तथापि।। 24।।

पदं कोङ्क णाधःस्थितं रामतीर्थम्
समुद्रस्य गर्भात्सदा पूतपापम्।
विशिष्टं भुवः खण्डमित्थं विचार्य
त्वया रक्षणीयं न चोल्लंघनीयम्।। 25।।

कृता सिन्धुजोर्वी निवासाय शुद्धा
समा चापि मन्त्रोक्षिता वह्निपूता।
तपः पुण्यशीलादिभिः वास्तुशुद्धिः
कृता भार्गवेणात्मवासाय योग्या।। 26।।

तदा सह्यगाश्चर्षयो राममेत्य
प्रसन्ना विलोक्योद्यमं भार्गवीयम्।
शुभां वाचमिष्टामथाशंसुरग्रे
नवं रामजं क्षेत्रमौत्सुक्यमूलम्।। 27।।

वसिष्ठोऽथ बोधायनो दाल्भ्यदेवो
मुनिर्वेलणोऽगस्त्यदेवस्तथा ये।
मुनीन्द्राः समाजग्मुरुर्वी नवीनां
विलोक्याभवन् रामतीर्थं प्रसन्नाः।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र शिष्येन याऽसीन्नवाचारता
भूतलान्वेषणार्थं कृता तां स्वयम्।
नन्दितुं सत्क्रियामेव सार्धं गणैः
शंकरः शंप्रदस्तत्र चाविर्बभौ।।29।।

भार्गवो वीक्ष्य शंभुं शिवासंयुतं
संजहर्षोत्सुकः पूजयामास तम्।
नम्रमूर्तिर्ननामर्षिसंघान् तदा
नन्दिभृङ्गीगगणान् वीक्ष्य मोदान्वितः।।30।।

पदं यत्र शंभोर्भवान्याश्च पुण्यम्
गणा यत्र शंभोः प्रसन्ना भवन्ति।
मुनीद्रा रता यत्र कर्तुं तपस्याम्
कथं सर्वतीर्थोत्तमा सा न भूमिः।।31।।

कृतं रामतीर्थं सु–तीर्थं शिवेन,
प्रदत्तानि पुण्यानि सम्यङ्मुनीन्द्रैः।
गणैः शंकरस्यात्र दत्तः प्रमोदः
जगत्तीर्थतीर्थं स्मृतं रामतीर्थम्।।32।।

शिवासम्मितः शंकरोऽधिष्ठितोऽभूद
स्तुतः प्रार्थितः पूजितो भार्गवेण।
प्रभावैर्युता तेजसाऽऽक्ता च पुण्या
जनैर्वन्दिता रामभूमिश्चकाशे।।33।।

शिवं संस्तुवन् भार्गवो राममूर्तिः
शिवस्यांघ्रिपद्मद्वयं श्रद्धयोत्कः।
ननामाह भक्त्या प्रियां वाचमिष्टां
प्रभो! ते कृपातो गतार्थोऽहमस्मि।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रभो! चाशिषा ते जितां सर्वभूमिं
प्रदायात्मवासाय चाब्धेर्धरित्रीम्।
विशोध्यात्र लब्धाम् जनावासयोग्यां
सदा वास्तुकर्मान्वितां कर्तुमीहे।।35।।

अनुग्राहितोऽयं जनो बाल्यकालाद्
यथा चास्त्रशस्त्रान्वितां गूढविद्याम्।
प्रदायाद्य तद्वद्धरामेत्य शम्भोः
कृता संगमादाशु पूता प्रकामम्।।36।।

न यावत्प्रभो! वास्तुशुद्धिर्धराया
भवेत्तावदावासयोग्या कथं स्याद्।
त्वया विश्वनाथेन सा पाविता चेद्
सदा वासयोग्या धरित्री भवेत्सा।।37।।

शिवः पार्वतीसंयुतःसद्गणैश्चे
न्निवासः करिष्यत्यलं विघ्नकैः स्याद्।
प्रभाते प्रणामादिभिस्ते दयालोः
सदा मंगलान्यावहिष्यन्ति लोकाः।।38।।

त्वया शूलपाणे! निवासेन नित्यं
जना मंगलेनान्विता वासिनोऽत्र।
प्रबुद्धा भविष्यन्ति चेच्छिष्यशिष्याः
तदा नाथ! शुभ्रं यशस्तेऽभितः स्याद्।।39।।

बिना ते निवासान्ममोद्योगमेतद्
वृथा यास्यतीत्थं विचार्याशु याचे।
प्रभो! सान्वयस्यात्र वासादवायं
कृपा स्यान्मयि प्रार्थिता शं प्रदेहि।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परशुरामकृतां विमलां स्तुतिं
परिनिशम्य विलोक्य जटाधरः।
वसितुमेव च रामकृते पुरे,
गणयुतश्च तथास्तु वचोऽब्रवीत्।। 41।।

एवं परशुरामोऽपि रामक्षेत्रं विनिर्ममे।
संस्कृतायां क्षितौ सद्यः ग्रामावासानकारयत्।। 42।।

कोणाः सप्त वै देशाः केरलाश्च तुलंगकाः।
सौराष्ट्राः करनाटाश्च बर्बराः करनाटकाः।। 43।।

कोङ्कणाश्चापि रामस्य देशाः ख्याता महीतले।
सप्तदेशतया भाति जामदग्न्ययशोऽवनिः।। 44।।

सागरान्तःस्थितां रामदेवो महीं
प्राप्य ग्रामान् पुरान् चापि देवालयान्।
निर्ममे चैव निर्मापयन् भारते
कीर्तिमास्थापयत् भूतले भास्वराम्।। 45।।

यावदासेतुहेमाचलो राजते,
पार्वतीशश्च यावत्त्रिशूली स्मृतः।
चन्द्रसूर्यौ च यावत्प्रकाशान्वितौ
रामकीर्तिश्च तावत् स्थिता कोङ्कणे।। 46।।

पूर्वं पितुः समधिगम्य कुलस्य विद्याः
पश्चाच्छिवादधिगतो निखिलागमान् यः।
हत्वा पुनश्च पितुरन्तकरं धरित्रीं
लब्धां प्रदाय च बभौ मुनिशद्वशेषः।। 47।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मातुराज्ञा शिरोधार्या मत्वा यज्ञं चकार सः।
सप्तर्षित्वं गतो येन, जमदग्निर्नभस्तले।। 48।।

बुद्ध्वा प्रदत्तधरणी न च वासयोग्या
वासाय सिन्धुमवनीं खलु याचते स्म।
यद्रोषबाणकृतसिन्धुभयादवाप्तं
क्षेत्रं च सर्वजनवासकृतेऽददात्तद्।। 49।।

तत्रापि लोकगुरुमेव शिवं शिवाय
चास्थापयच्च विनयेन समाहितेन।
यस्तं स्वशास्त्रनिपुणं भुवि जामदग्न्यम्
शस्त्रागमेऽपि रसिकं प्रणमामि रामम्।। 50।।

भूमिमाकृष्य कृष्यर्थमाविष्कृतां,
तत्र वासाय चायं व्यधाद् प्राणिनाम्।
ब्राह्मणानां निवासस्तथाऽकारयद्,
भूतले भार्गवीया सृती राजते।। 51।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये रामक्षेत्र निर्माणं नाम चतुर्विंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# पञ्चविंशः सर्गः

कोङ्कणाधः समुद्रे स्थिता मेदिनी
याऽसमा तां समां भार्गवोऽचीकरत्।
रोपयामास रंभासहस्त्राण्यलं
नागवल्ली–रसालान् रसैरन्वितान्।।1।।

नारिकेलांश्च पूगीफलादीन्यथो
भार्गवः पुष्पवृक्षान् लतागुल्मकान्।
सेचनार्थं शुभा दीर्घिका निर्ममे
नीरयन्त्राणि चित्राणि चक्रे मुनिः।।2।।

कोविदाग्रेसरः सस्यसंपत्प्रियो
भूषयन् मेदिनीं स्वामुदारामहो।
एक एवायमासीद्धली चक्रभृद्
मेघवद् वायुवद् सोमवद् राजते।।3।।

एकदाऽयं पयोष्णी–सरित्तीरजान्
ब्राह्मणान्नेतुकामो महाबुद्धिमान्।
वेद–वेदाङ्ग–पारङ्गतान् दक्षिणं
प्राप्य चोवाच तैर्मानितो भार्गवः।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूसुराश्चित्तमाधाय संश्रूयताम्,
निर्मिता मेदिनी या समुद्रोदरे।
सह्यपार्श्वे मया तत्र साक्षाच्छिवो
वत्सलत्वादधिष्ठापितः पूजितः।।5।।

क्लृप्तरम्योटजास्तत्र संस्थापिता
स्तापसा यत्र भान्त्यब्धितीर्थानुगाः।
नातिदूरं नदीनां पती राजते
तीर्थराजोऽपि सह्यान्तिकं शोभते।।6।।

आशुतोषः प्रभुर्भक्तसंरक्षणे
दत्तचित्तो धरां मामकीनां च माम्।
पालनार्थं कृपाभावतोऽप्याययौ
तं स्मरन् पूजयन् तत्र वासः प्रियः।।7।।

तत्र वो नेतुमिच्छाम्यहं साम्प्रतम्
स्वाश्रमे कापि नार्तिर्भवित्री क्वचिद्।
रक्षिता वासिनो मद्बलेनानिशम्
निर्भया रोगहीना भविष्यन्त्यहो।।8।।

नैव दारिद्रयदृष्टिर्न वृत्तिर्मुधा
नापमृत्युः क्वचिद् भोगमोक्षावुभौ।
मृत्युमृत्युस्सदाऽहं भविष्याम्यतः
क्षेत्रवासे रतानाञ्च संरक्षकः।।9।।

विद्ययाऽऽलंकृता वेदविद्यारता
बोधविज्ञाननिष्ठा वरिष्ठा बुधाः।
ब्राह्मणा ब्रह्मविद्यासु पारङ्गता
रामतीर्थे वसन्त्वाशु मुक्ता भयाद्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ब्राह्मणा रामवाक्यं निशम्योद्यता
मंत्रणां चक्रुरुद्गन्तुकामा मिथः।
आदिदेवं विदुस्तं भृगोर्नन्दनं
क्षत्रहन्तारमन्यायविध्वंसकम्।। 11।।

आहता अन्वयुस्ते द्विजाःसत्वरम्
षष्ठि संख्याः कुटुम्बाः पवित्रान्वयाः।
पूतगोत्राश्च विद्यावदाताः शुभा
रामतीर्थे निवासाय रामानुगाः।। 12।।

रामतीर्थस्य नद्याश्च याम्ये स्थितम्
प्रत्यगाशागतम् सर्वसंपद्भृतम्।
कारयामास रामःसुरम्यं पुरम्
देवलोकोपमं विश्वकर्मानुगैः।। 13।।

स्थापयामास तान् ब्राह्मणान् भार्गवः
रम्यहर्म्येषु हृद्येषु तस्मिन् पुरे।
पूर्णकामस्य रामस्य चित्तान्वि तैः
पावितं स्वैस्तपोभिर्व्रतैः संयमैः।। 14।।

स्वर्धिमन्तो निवासान् विभज्यानिशं
संवसन्तो द्विजास्तेजसा भासिताः।
चित्तपूर्वं बभौ पावनं तत्पुरम्
रामतीर्थे बभुस्तेऽपि चित्पावनाः।। 15।।

भार्गवो राम आमन्त्र्य तान् ब्राह्मणान्
प्रोक्तवान् भो! द्विजा वो मदीयाः सदा।
मामिकेयं मही क्षेत्रमस्मत्पुरम्
यत्र वासो भवद्भिः कृतः स्वीकृतः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रावणे कृष्णपक्षे दिनान्ते मुदा
निर्मितं शंभुतिथ्यामिदं सत्पुरम्।
वत्सरे वत्सरे पूजयध्वं यतो
ब्राह्मणा जन्मभूमेश्च जन्मोत्सवः।।17।।

जन्मभूमिर्द्युलोकाद् वरिष्ठा सदा
जन्मदात्र्या अपीत्थं सदा धारयन्।
सज्जिताः पुण्यजन्मोत्सवं वार्षिकं
संविधातुं प्रमादं न कुर्वन्त्वलम्।।18।।

ब्राह्मणा रामवाणीं निशम्योत्सुकाः
पूजयामासुरुत्साहिताः स्वां भुवम्।
राम–संपालितैर्ब्राह्मणैः साम्प्रतं
कार्यते वार्षिकञ्चापि भू–पूजनम्।।19।।

भार्गवश्चापि तान् भूसुरान् नित्यशः
पालयामास कामैरनेकैरलम्।
रोगतः शत्रुतो भीतितो भोगतो
राम–संरक्षिताः क्लेशहीना द्विजाः।।20।।

गीयमानाः कलौ रामकीर्तिं प्रियाम्
कीर्त्यमानाः कथां रामवीर्योद्भवाम्।
मोदमाना वसन्तश्च दीर्घायुषो
राम–विप्रा व्रते कर्शिता गर्जिताः।।21।।

कीर्तिमाश्रुत्य नानाविधाः सज्जना
भिन्नदेश्याश्चतुर्वर्णजा आययुः।
रामनाथाः स्मरन्तश्च रामं सदा
भार्गवाज्ञारतास्तस्य क्षेत्रेऽवसन्।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रामविप्रैः सहान्ये द्विजा आवसन्
रामभूमौ कृपाभाज एवाभवन्।
तेऽपि निम्पाकवृक्षानिवाद्रिस्थितान्
चन्दनत्वं गताश्चन्दनान्याश्रिताः।। 23।।

भार्गवः षष्ठिवंशान् पवित्रं व्यधाद्
सर्वविद्या ददौ तेभ्य इष्टास्तदा।
तेषु चित्रा स्थिता पूतता स्थानजा
पावनाश्चित्रपूर्वाः स्मृता ब्राह्मणाः।। 24।।

सम्यगाहूय तान् भार्गवश्चाब्रवीद्
भो! द्विजाश्चेद् विपत्तिः क्वचिज्जायते।
सर्वथा वः समेत्याह्वयन्त्वेव मां
साधयिष्ये क्षणाद् कार्यमेत्यात्र वः।। 25।।

ब्राह्मणेभ्यो वरं दत्तवान् विश्रुतः
सोऽथ गोकर्णतीर्थं ययौ भार्गवः।
क्षेत्रवासिष्वलं तन्मनः सज्जितम्
तेषु कुर्वन् कृपां सः प्रभुं सेवते।। 26।।

भार्गवे प्रस्थिते तद्द्विजाः क्षेत्रिया
वित्तधान्यान्विता विप्रधर्मे रताः।
मन्त्रयामासुरन्योन्यमाशान्विता
रामवाक्यं च सत्यापितुं ह्यञ्जसा।। 27।।

जामदग्न्यः सुधीर्वत्सलत्वं गतो
रामतीर्थावनेर्भूसुराणां वने।
सम्यगाक्रन्दनं चाश्रृणोद् दूरतः
प्रादुरासीत्पुरोऽसौ कृपालुःस्मृतः।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पृष्टवान् केन कष्टेन वा शत्रुणा,
पीड़िता वो द्विजा मां समाकारयथ।
कं निहन्म्यद्य शत्रुं झटित्येव मां
सूचयित्वा सदा निर्भयाः सन्तु वः।।29।।

भार्गवीयां गिरं ते निशम्याश्रिताः
भीतिपूर्णा द्विजास्ते तमूचुः क्वचिद्।
नास्ति दुःखं न शत्रुः क्वचिद् भूतले
त्वत्कृपातोऽभया नो वसामः पुरे।।30।।

शङ्कमाना वयं जल्पनं तावकं
सत्यमास्तेऽनृतं वेति वेत्तुं प्रभो!।
क्रन्दितं तत्परीक्षार्थमस्मादृशैः
त्वत्कृपानिर्भरैः क्षन्तुमर्हस्यलम्।।31।।

क्रोधरक्तेक्षणो लोचनाभ्यां दहन्
भूसुरान् तत्र चालोकयद् भार्गवः।
भो! कदन्नाशनाश्चैलखण्डान्विताः
शापतो मे च यूयं सदा वर्त्स्यथ।।32।।

शापमाश्रुत्य वृद्धा बुधैः सेविता
श्चित्तपा भूसुरा रामपार्श्वं गताः।
प्रार्थयामासुरुद्विग्नचित्ताः प्रभुम्
तं शरण्यं स्वनाथं नताः पालकम्।।33।।

त्वं हि नाथोऽसि नः क्षेत्रवासे रताः
त्वां बिनाऽनाथताऽस्मासु किं कुर्महे।
किंकरास्ते वयं त्वय्युदासीनतां
प्रापिते रक्षकःकश्च नो भूतले।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वं कृपासागरश्चित्तपानां कृते,
सर्वदो नर्मदस्त्वञ्च वंशे प्रभुः।
त्वं मतिस्त्वं गतिस्त्वं विभूतिश्च नः
त्वां बिना त्रातुमन्यन्न भूमण्डले।। 35।।

निर्भयो नोऽन्वयस्ते कृपातःसदा
हे! प्रभो! नोऽन्वयः शापयोग्यो न ते।
नैकदोषाय सर्वे प्रकोपस्य ते
पात्रतां यान्ति नस्त्राहि तुभ्यं नमः।। 36।।

क्रोधमुत्सार्य चास्मासु कार्या दया
धर्मविध्वंसको भूतले सर्वतः।
संप्रविष्टः कलिः शाधि तं दुष्करम्
कस्य दोषोऽत्र संलक्ष्यते तं बिना।। 37।।

वीक्ष्य दोषं कले रोषहीनो मुनिः
ब्राह्मणान् तान् क्षमित्वा प्रतिज्ञातवान्।
भो! द्विजा गूढ़रूपेण तिष्ठाम्यतो
भूतलेऽन्तर्हितो ब्राह्मणान् रक्षयन्।। 38।।

जामदग्न्यश्चिरञ्जीवितामाप्तवान्
नास्ति देहम्भृतां गोचरः साम्प्रतम्।
गूढचारी बभौ पूजकानां हितं
साधयन् वर्तते सन्निधावेव सः।। 39।।

चित्तपास्ते द्विजाः स्वं प्रभुं मूर्तिभिः
पूजयन्तस्ततो मूर्तिसंस्थापनम्।
संविधायाशु तत्तीर्थभूमौ रता
राममाराधनार्थं सदा भूतले।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



राम–संरक्षिता रामतीर्थावनी
रामममाराधितुं रामविप्राः रताः।
संवसन्त्यद्य देवाश्च यत्रोत्सुकाः
सन्ति वासाय तन्याद् धरा भार्गवी।।41।।

पत्तनं चित्तपारव्यञ्च यत्रास्तृतम्
प्रौढ़वाडेशलिङ्गरस्थितं भू–गतम्।
यत्र गूढः सदा जामदग्न्यो मुनि
र्गूढदेशः प्रसिद्धो धरामण्डले।।42।।

निर्मितं क्षेत्रमित्थञ्च शूर्पारकम्
शूर्पवद् यस्य दिव्याकृतिर्भूतले।
दक्षिणे वैतरण्याश्च सह्यादधः
सिन्धुपर्यन्तमास्ते भृगोर्मण्डलम्।।43।।

तत्र दिव्यान्यनेकानि तीर्थान्यहो
भार्गवेणापि संस्थापितान्याययुः।
खादिरेशश्च मुक्तेश्वरो राजते
बालुकेशो हरीशो हरेशस्तथा।।44।।

बाणगङ्गा सरस्वत्यथो निम्नगे
यत्र याम्ये कुशानां स्थली राजते।
तत्र गो–रक्षकं श्रीकुमारी–भवम्
तीर्थमास्ते तथा रामकुण्डाभिधम्।।45।।

जामदग्न्येन संप्रेरितश्चैकदा
श्री जलेशश्चकारात्र रामालयम्।
निर्मितं रत्नभारैर्मुनीन्द्रैः स्तुतम्
सेवितं देववृन्दैः सदा भूतले।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूरि रत्नाकुला वारुणी सा पुरी
तत्र गायन्ति नृत्यन्ति वासे रताः।
रामगाथां सदा संस्मरन्तश्च ते
रामनाथाः स्वधर्माभिलीना मुदा।। 47।।

वेदतत्त्वार्थविद्यासु पारङ्गता
भूरि यज्ञैश्च रामं समाराधितुम्।
सर्वलोकस्य माङ्गल्यमारक्षितुं
सर्वदा सन्ति पौरा गृहे तत्पराः।। 48।।

यत्र रामः प्रभुर्देवता रक्षको
यत्र रामः प्रभुश्चैव संराध्यते।
यत्र रामः प्रभुश्चास्ति लीनोऽभितो
यत्र रामः प्रभुस्तज्जनैर्दृश्यते।। 49।।

श्रीचित्तपावनमहीसुरताम्प्रदाय
भूमिं तथाब्धिगत–वासविधौ विधाय।
यज्ञैस्तपोभिरथ संवसतां जनानां
क्षेमं प्रदर्श्य विपिनं प्रययौ स रामः।। 50।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये रामक्षेत्रवर्णनं नाम पञ्चविंशः सर्गः।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# षड्विंशः सर्गः

प्रदक्षिणार्थी क्वचिदेष रामः
गोकर्णतीर्थं प्रति गन्तुकामः।
मुनिर्महेन्द्राचलमेत्य विप्रान्
मुनीनृषीनाश्रमगान् ददर्श।।1।।

तमालशालासनकोविदारैः
मन्दारतालार्जुनवेणुवृक्षैः।
रसालपूगैर्हरितं समन्ताद्
सह्याचलं चारु ददर्श रामः।।2।।

श्रृंगैर्मृगैर्गोभिरलं प्रकीर्णम्
गजैर्गजेन्द्रैश्च मृगाधिपैश्च।
व्याघ्रैश्च शल्यै रुरुभिः समेतं
दृष्टं वनं तन्महिषैर्वराहैः।।3।।

रम्भाद्रुमैर्निर्झरचामरैश्च
छत्रैरिवानेकविशालवृक्षैः।
संराजितं सह्यगिरिं विलोक्य
जहर्ष भूयो जमदग्निसूनुः।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तीर्त्वा ततस्तौलवदेशमेत्य
श्रीशं शिवं प्राप्य चकार दिव्याम्।
स्तुतिं समर्च्याखिलमंत्रयंत्रै
रामो विधिज्ञस्तमपूजयच्च।।5।।

ततः प्रतस्थे च दिशं प्रतीचीम्
ददर्श सः शुक्तिमतीं नदीञ्च।
स्नात्वाऽजपज्जयमशेषदेवं
रामो बभौ कोटिरविप्रकाशः।।6।।

तपोरता वीक्ष्य धवैर्विहीनाः
सुदुःखिता भर्तृनियोगनुन्नाः।
नार्यो नवाजग्मुरुदश्रुपूर्णा
विलोक्य रामं जहृषुः समन्ताद्।।7।।

ताः श्रोत्रियाणां कुलजाः सगर्भा
निःसारिता ग्रामवधूभिरित्थम्।
रामं समेत्योचुरलं विषण्णाः
पाहीति नस्ते शरणं व्रजामः।।8।।

त्रातारमन्वेष्टुमिहागताःस्मः
वयं प्रभो भार्गव! पाहि दीनाः।
नान्योऽस्ति नः पालयिता जगत्यां,
कृत्वा दयां नाथ! समुद्धरास्मान्।।9।।

नोद्धारणीया वयमद्य लोके
त्वयाऽपि चेत्तर्हि मता मुमूर्षा।
साफल्यमेवेष्यति नः समन्ताद्
ततः समुद्धारय तारयेति।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वयं त्वदीया गुरुदेव! नित्यं
सुनिन्दिताः पापविदूषिताश्च।
हतप्रिया मृत्युसमाश्च नार्यः
त्वमेव नस्तारय पालयेति।। 11।।

सविस्मयोत्फुल्लविलोकनेन
समुद्धृतास्ता जमदग्निजेन।
कृपालुना धैर्यरसान्वितेन
हर्षान्विता दत्तवराश्च तेन।। 12।।

सुमेघगम्भीररवेण रामः
प्रोवाच नार्यो धृतिमावहन्तु।
सम्पादितं लोकविगर्हितं यत्
युष्माभिरक्लिष्टतयाऽनुयुस्तद्।। 13।।

सन्दर्शयामास च भार्गवोऽपि
क्रोडेश्वरं भद्रनिधिं महेशम्।
उवाच ता वासमतन्द्रिताश्च
यूयं कुरुध्वं पशुनाथनाथाः।। 14।।

ताश्चान्वसूयन्त सुतान् समग्राः
ते गोलकाख्याः प्रथिता बभूवुः।
वृत्या विवर्णाश्च वसन्ति लोके
भुवं विकर्षन्ति वहन्ति भारम्।। 15।।

भृगूत्तमस्तानभिरक्षणार्थम्
उवास कालं बहु तौलवाख्ये।
महेन्द्रमद्रिं स इयेष यातुम्
पेतुःस्त्रियस्तस्य पदाब्जयुग्मे।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



असंस्कृतांस्तानथ गोलकांश्च
संस्कर्तुमैच्छद् भृगुवंशदीपः।
तदर्थमावेदयदेष विप्रम्
ह्यग्नीध्रमिष्टं खलु सोमपीठम्।। 17।।

अवैदिकैर्नामयुतैश्च मन्त्रैः
संस्कारमेषामथ कारयन्तु।।
भवन्त इष्ट्वाऽपि च लौकिकेन
विधाय मार्गेण च पावयन्तु।। 18।।

गुरोः समाकर्ण्य गिरं महात्मा
तान् गोलकानेव समाजुहाव।
जलैः समन्त्रैरभिषिच्य सर्वान्
मृत्स्नानमादावथ भस्मजातम्।। 19।।

ततो विधानेन स शुक्तिमत्याः
संस्नापयामास जलेन सर्वान्।
नवात्मजानामथ नामकर्म
व्यधात् समेषां नवगोलकानाम्।। 20।।

नामानि कृत्वा विधिना च तेषां
चौलोपनीतादिविधिस्तथैव।
महामतिश्चापि गुरोर्निदेशाद्
ह्यकारयच्चापि स सोमपीठिः।। 21।।

उद्वाहकार्याणि च गोलकानाम्
कृताकृतं कर्म च सोमपीठिः।
व्यधादलं लौकिकमन्त्रवाक्यै
र्न केन पाल्याऽस्ति च भार्गवाज्ञा।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरोर्निदेशं परिपूर्य विप्रो
व्यचिन्तयच्चाथ निवासहेतौ।
तत्रैव वासाय गिरा नभस्तः
समाश्रृणोद् विस्मयमाप सद्यः।।23।।

ग्रामस्तदा शुक्तिमतीतटे सः
कृपारुनामा दिशि पश्चिमायाम्।
विधाय तेषां नव गोलकानाम्
वासो मुनीशः समकारयच्च।।24।।

स सोमपीथी न्यवसच्च तत्र
तथात्रिदेवोऽपि पुरोहितोऽभूद्।
श्री जामदग्न्यावनिमण्डलेऽस्मिन्
द्विजाः समन्ताद् न्यवसन् वरिष्ठाः।।25।।

द्विजाग्रणीर्वासकृतेऽथ तेषां
ग्रामान् ददौ पञ्च च गोलकेभ्यः।
ग्रामे तथैके न्यवसत्तदैको
ह्युभावुभौ ग्रामचतुष्टये च।।26।।

क्रोडेश्वरो दैत्यहरोऽत्र नित्यम्
वसन् जनानाम्परिपालकोऽस्ति।
दुःखानुहन्ता भजतां समन्ताद्
कृपारुवासे कृतनिश्चयानाम्।।27।।

सुखेन यावद्रविशीतरश्मी
वसध्वमत्रैव हिताय बालाः।
न मे कृपातो भुवनेऽपकर्तुं
युष्माकमास्ते समुवाच रामः।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



युष्माकमत्रास्तु सदाऽत्रिगोत्रम्
आर्शीभिरिष्टं भुवि वर्द्धितं स्याद्।
नुतो ययौ गोलकबालकैश्च
द्विजोत्तमोऽसौ भृगुनन्दनश्च।।29।।

गतेऽथ रामे नवगोलकाश्च
विधाय वाटान् गृहकर्मलीनाः।
बभूवुरुत्पाद्य कुलं स्वकीयं
पुष्णन्ति हृष्यन्ति वसन्ति तत्र।।30।।

वाटान् प्रकुर्वन्ति च सह्यपादे
वृत्यै वसन्तो नवगोलकास्ते।
विधीयते लांगलकर्म चैभिः
पूगीफलानामथ वाटिकाऽपि।।31।।

केचिद् वहन्तीह च भूरि भारान्
सुवाटिकाः केऽपि च कुर्वतेऽत्र।
सेवारता वृत्तिरताश्च केचिद्
उपत्यकायामचलस्य भान्ति।।32।।

मूढाश्च ते पञ्च पुरेषु वासे
रताःसदापद्ग्रसिताश्च लोकाः।
निराकृता नैव समाद्रियन्ते
जनैरथान्यैर्व्यवहारकाले।।33।।

नैतैःसहाचर्तुमथोत्सुकाश्च
भवन्ति चान्ये सुजनाःकदापि।
समाजनिष्ठारहिताः सदैव
ते गोलकास्तत्र वसन्ति खिन्नाः।।34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सहाशनं नो सह–भाषणं वा
सह–प्रयाणं सह सन्निवासः।
न कापि यात्रा सह गोलकैश्च
कुर्वन्ति लोकस्य जनाः कदापि।। 35।।

तथापि वाडेश्वरपालितास्ते
वसन्ति सार्धं सुजनानुभावाः।
मिथः समाजाचरणं दधानाः
रामेण गुप्ता भुवि गोलकाश्च।। 36।।

अथैकदा नागगणाःप्रतेपु
स्तपांसि सह्याचलपश्चिमांशे।
श्रीजामदग्न्येन कृतेऽथ देशे
वृतं च वर्णाश्रमिभिश्चतुर्भिः।। 37।।

सदाग्निहोत्राभिरते सुदेशे
वेदागमाभ्यासरतैश्च विप्रैः।
अधिष्ठिते धर्मचणे बभुश्च
तपोरताः कोङ्कणजा हि नागाः।। 38।।

गतञ्च दिव्याद्वशतं क्रमेण,
प्रीतस्तपोभिश्च स जामदग्न्यः।
जगाद तेभ्योऽथ वराय काले
तपस्यया लब्धफलाश्च नागाः।। 39।।

प्रणम्य मूर्ध्ना भृगुनन्दनं तम्
नागाः समूचुर्विनताः पुरस्तात्।।
प्रभो! भयं नोऽत्र च वैनतेयाद्
सदा विनाशाय विचिन्तयामः।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निवारणं चेद्भयतो भवेद्धि
स्वस्त्यत्र नश्चापि भविष्यतीति।
त्वां प्रार्थयामो मम नाम चास्माद्
तदा तपः पुण्यफलं लभेच्च।। 41।।

निशम्य नागैर्गदितां समस्यां
भृगूत्तमस्तां परिहारबुद्ध्या।
व्यचिन्तयल्लोकहितं समग्रं
पुरःस्थितेभ्यः समुवाच रामः।। 42।।

भयं न कार्यं खलु वैनतेयाद्
शिवं समानेतुमहं यतिष्ये।
स्वभूमिजानामभिरक्षणार्थं
शिवाय च क्षेत्रनिवासिनाञ्च।। 43।।

नागाः! शिवोऽसौ शिवया समेतो
वसिष्यतीहाखिलदेवदेवः।
यदा तदा क्षेत्रगताश्च बाधाः
शमं प्रयास्यन्ति जगाद रामः।। 44।।

तिरोहितोऽभूदथ जामदग्न्यः
ययावुदीर्याथ गिरीशवासम्।
व्यलोकयच्चाथ सपार्वतीकं
शिवं सुयोगासनसंस्थितं तम्।। 45।।

तं ज्ञानमुद्राधरमिष्टदेवं
ननाम मूर्ध्ना जमदग्निसूनुः।
पादानतं वीक्ष्य जगन्निवासः
जहर्ष चोत्थाय तमाललम्बे।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



आयाहि भो 'राम' उदीर्य वाचम्
अपृच्छदारात्कुशलं तदीयम्।
क्षेमं निवेद्याचमनं विधाय
स्ववृत्तमाद्यन्तमवीवदत्सः।। 47।।

गुरोः कृपा तेऽस्ति जनेऽथ यस्मिन्
कुतोऽशुभं तस्य भवेत्कदापि।
शिवे प्रसन्ने शिवता सदैव
निवासमाकल्प्य भवेदुदग्रा।। 48।।

यदा यदा नाथ ! भवामि खिन्न
स्तदा तदा ते चरणौ स्मरामि।
विलोक्य चानन्दमहं भजामि,
पदाब्जयुग्मं तव मां दयस्व।। 49।।

प्रभो! भवान् लोकगतिः शिवोऽपि
महाबलः शंकरशंकरोऽस्ति।
कृपापरः क्षेत्रगते मदीये
विधाय वासं कुरु मां कृतार्थम्।। 50।।

वसन्ति नागास्तव भक्तिपूर्णाः
सदा तपोलीनतया विभान्ति।
हिताय तेषां कुरु नाथ! वासम्
विद्यागुरो मां च समुद्धर त्वम्।। 51।।

पूर्वं मया तेऽथ निवासभूमिः
प्रकल्पिता सागरजा मही सा।
तामद्य वासाय निवेदयामि
समुद्धर! त्वं निजवासतो माम्।। 52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शिवोऽपि लोकस्य हितं विचिन्त्य
बभाण रामं च तथास्तु वत्स!।
दिशत्वलं मामहमद्य चोक्तं
त्वया यथा तादृशमाचरिष्ये।। 53।।

एवं शिवो भार्गवपूजितः सन्
समाययौ कोङ्कणभूमितीर्थम्।
प्रतिष्ठितश्चापि भृगूत्तमेन
रराज शंभुः शिवया सहैव।। 54।।

तेपुस्तपो नागगणाश्च यत्र
शिवः समागत्य सहोमयाऽऽस।
नागाश्च पार्श्वस्थमुमापतिं तं
विलोक्य सर्वे जहृषुः प्रसन्नाः।। 55।।

शिवोऽब्रवीन्नागगणा मनोज्ञं
वरं वरेण्यं वरयन्तु वोऽद्य।
हिताय च प्रार्थनयाऽगतोऽस्मि
रामस्य सेवाविधिनाऽत्र वर्ते।। 56।।

रामेण च क्षेत्रगते स्वकीये
कारुण्यपूर्णेन वयं हि नागाः।
संस्थापिताः स्मश्च सुपर्णभीते
स्त्वां लोकनाथं शरणं प्रपन्नाः।। 57।।

अन्तर्भुवो वासतया कुलं नः
सुरक्षितं रामजपानुभावाद्।
भयेन च प्रव्यथिता वसामः
पाहीश! नो लोकनियामकस्त्वम्।। 58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवं ब्रुवाणे सति नागलोके
स वैनतेयः प्रविवेश सद्यः।
बुभुक्षितो भोक्तुमहीनुदग्रो
विलोक्य नागा भृशमद्रवन् तम्।।59।।

शिवाङ्गमाश्रित्य मुदा स्थितास्ते
भयाद् तदा प्राणपरीक्षया च।।
विभूषणं शंभुतनौ च सर्पा
बभुः शिवो नागविभूषितोऽभूद्।।60।।

जटासु नागावलयो लसन्ति
मौञ्जी शिवस्याहिकृता विभाति।
यज्ञोपवीतेऽपि स नागदेवं
विभर्ति नागेश्वरतां प्रयाति।।61।।

गलेऽहिमाला करमालिकाऽपि
किरीटशोभाऽहिगणैर्विभाति।
शिवस्य कौपीनगताश्च नागाः
नागेश्वराङ्गेषु लसन्ति नागाः।।62।।

श्लिष्टानहीन् देहगतान् विलोक्य
जगाद शंभुर्हरिवाहनं तम्।
सुपर्ण! नागांश्च मयाश्रितांस्त्वं
कथं समर्थो भवितासि भोक्तुम्।।63।।

ममाश्रिता ये भुवि सन्ति लोकाः
पुरो न हन्तुं प्रभवेच्च कोऽपि।
ममाङ्गभूषाव्रतिनश्च नागान्
न हन्तुमर्हस्यथ पक्षिराज!।।64।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्मरन् सुपर्णो हृदि रामकार्यम्
शिवानुरक्तानथ सर्पकांस्ताम्।
विहाय तत्क्षेत्रमगात् सुपर्णः
स्थलान्तरं स्वैरविहारयोग्यम्।।65।।

रुद्रस्ततो नागविभूषणोऽभूद्
द्विजेन्द्रसंपूजितपादपद्मः।
समर्पितो भार्गवनन्दनेन
शिवाय केनाथ शिवो न वन्द्यः।।66।।

निशम्य पौराः शिववासवृत्तम्
समेत्य विप्राश्च शिवं प्रणेमुः।
सहस्रशो दण्डवदानमन्तः
शिवस्तुतिप्राञ्जलयोऽस्तुवंश्च।।67।।

नमो नमस्ते प्रणतार्तिहन्त्रे
महोरगैर्भूषितदेहधर्त्रे।
सदाऽवितारं निजभक्तकानां
नमामि नागेशमुदारशीलम्।।68।।

नमामि संसारभयघ्नमीशम्
भक्तार्तिनाशाय धृतावतारम्।
प्रसीद सर्वेश! सदाशुतोष!
वयं च नागाः शरणागतास्ते।।69।।

शिवः प्रसन्नः सुमुखः स्तवैश्च
नागाह्वयानाह च विप्रसंघान्।
क्षेत्रं महत्पुण्यमिदं समृद्धम्
श्रियान्वितं रामविनिर्मितञ्च।।70।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वरप्रदेयं भवतां पुरस्ताद्
उपस्थिताऽनन्तगुणा च देवी।
नागोपहारैर्बलिभिः सुपूज्या
स्थिता भविष्यत्यथ रामतीर्थे।। 71।।

निवासिनां भोगसुखप्रदात्रीम्
कल्याणदात्रीं भवभीतिहन्त्रीम्।
सम्पूज्य वो वीतभया वसन्तु
न रामनाथाः परितापनीयाः।। 72।।

एवं शिवोक्तिं परिगृह्य विप्राः
नित्यं सदाचाररता बभूवुः।
शान्ताभिधो रामपरायणोऽभूद्
कश्चिद् द्विजो रामजपानुलीनः।। 73।।

ध्यायन् सदा राममतिर्महात्मा
श्रीसूक्तमन्त्रानुजपे निमग्नः।
देवीं समाराधयितुं तपस्वी
शान्तश्चकाराशु नतिं स्वदेव्यै।। 74।

समर्चिता देवगणैः प्रसन्ना
स्तुता सखिभ्यां सह सर्ववन्द्या।
देवी सुकन्यावपुषोत्थिताऽभूद्
वरप्रदानाय नताय तस्मै।। 75।।

प्रवीज्यमाना बहुचामरैश्च
महार्हरत्नैः सुविभूषिता सा।
क्षौमाम्बरैर्नूपुरघोषपूर्णै
रलंकृता भूरि रराज देवी।। 76।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जगद्विधात्री च समर्चिताऽभूद्
द्विजैरनेकैः कथिताऽथ शान्ता।
शिञ्जारवध्वस्ततमः प्रशान्तः
दर्श सुदर्श प्रणनाम देवीम्।। 77।।

रक्ताम्बुजांघ्रिद्वयबद्धरावं
निशम्य शान्तो मुहुरुज्जहर्ष।
नवार्णमन्त्रैरथ सूक्तपाठैः
तुष्टाव देवीं प्रणतो मनस्वी।। 78।।

प्रीता तदा सा प्रणतार्तिहन्त्री
शान्तं द्विजं प्राह विपन्निहन्त्री।
धनाय लाभाय कुलाय दात्री
सुखस्य शान्ता भुवि भुक्तिदात्री।। 79।।

मुक्त्यै च भुक्त्यै प्रणतां जनानां
स्मृता च देवी भुवनेऽस्ति शान्ता।
सदा समाराधनतो ददाति,
सुखानि लोके प्रथितानि यानि।। 80।।

उक्त्वा च वल्मीकगता बभूव,
देवी ततो वाक्यमनुस्मरन् सः।
शान्तस्ततापाथ च तोषणाय,
शान्तां स्वभक्त्या भुवि सन्निरुद्धाम्।। 81।।

अनन्तपीठासनसंस्थितोऽसौ
चतुर्भुजः शंखगदारकंजैः।
सुशोभितो रत्नविभूषिताङ्गः
शान्ताकराश्लिष्टहरिः स्थितोऽभूद्।। 82।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पीताम्बरालंकरणं शरीरे
श्रीवत्सलक्ष्मोरसि शोभमानम्।
गले च दिव्या वनमालिकाऽस्ति
सुयोगिभिर्ध्यातपथः स्थितोऽभूद्।। 83।।

स्वविग्रहं तत्र मुनिं प्रदर्श्य
तिरोहितश्चापि तमब्रवींच्च।
वरं ददाम्यद्य यदीप्सितन्ते
याचस्व संश्रुत्य मुनिस्तमूचे।। 84।।

वरप्रदो भक्तजनानुकम्पी
शान्त्या सहात्रैव हरे! वितिष्ठ।
निवासिभिः क्षेत्रगतैश्च सर्वै
मद्वंशजातैरभिपूजितश्च।। 85।।

प्रभोः प्रसादेन तवाखिलेश!
सुखान्विता मुक्तिपरायणाश्च।
वंश्या मदीया खलु मुक्तिशीलाः
सदा भवेयुश्च वरं प्रदेहि।। 86।।

द्विजोक्तिमित्थं भगवान् निशम्य
तमाह मुक्त्यै भवताञ्च सिद्धयै।
क्षेत्रे स्थितोऽस्म्यत्र तया च शान्ति
र्देवी तु सौभाग्यप्रदा तथैव।। 87।।

छत्रं सुवर्णस्य घटेन युक्तं
सोमः स्थितः क्षेत्रजनान् च पातुम्।
दातुं मनोऽभीष्टमथार्चकेभ्यः
सेवारतानां वरदो हरिश्च।। 88।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्थं हरिः परशुरामकृतेऽथ तीर्थे
वासं विधाय फलदो भजतां बभूव।
शान्त्यै सतां गतिमजादिकृतां प्रदातुं
श्रीरप्यलं न्यवसताथ हरिश्च भक्त्या।।89।।

श्रीभार्गवोऽपि निर्माय नवीनदेशान्
क्षेमं विधाय खलु संवसतां जनानाम्।
विद्यां प्रदातुमभिकांक्षति चानतेभ्यः
शास्त्रानुशीलनपरः प्रबभूव रामः।।90।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये परशुरामकृतं नवदेशनिर्माणं नाम षड्विंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सप्तविंशः सर्गः

अधीत्य रामोऽपि गुरोः सुविद्याः
ऋणं ह्यपाकर्तुमपाठयच्च।
बभौ बली भीष्मपितामहो यो
रणे तुतोषात्मगुरुं स शिष्यः।।1।।

अथैकदा शान्तनुसंभवोऽयं
विचित्रवीर्यस्य विवाहहेतौ।
समानयत् काशिनृपस्य कन्याः
स्वयंवराद्राजकुलानि जित्वा।।2।।

न्यवेदयन्मातरमेव ताश्च
व्यलोकयत्सत्यवती प्रसन्ना।
समुद्यता प्राप्य वधूश्च सद्यः
विवाहकार्यं प्रति धर्मशीला।।3।।

विवाह काले समुपस्थितेऽपि
समेत्य तं भीष्मपितामहं सा।
जगाद चाम्बा विनता प्रभो! मे,
पतिश्च लोके खलु शाल्वराजः।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पितू रहस्ये स मया वृतोऽभूद्
वृताऽप्यहं तेन नराधिपेन।
यदत्र योग्यं परिचिन्त्य देव!,
विधातुमर्हस्यथ धर्मनिष्ठः।।5।।

नृपान् पराजित्य वयं त्वदीया
स्तथापि यत्सत्यमहं वदामि।
पुनर्यथा धर्मविधिस्तथात्र
त्वया विधेयश्च ममाप्यभीष्टः।।6।।

ततोऽम्बिकामेव विवाह्य राजा
कृतः सहाम्बालिकया विवाहः।
स्ववंशवृद्ध्यै जननीं तुतोष
मतिं न चाम्बोद्वहने चकार।।7।।

पुरोहितैर्विप्रगणैरमात्यैः
समं विचार्याथ पितामहश्च।
नृपाय शाल्वाय सुरूपिणीं ताम्
सुतां तथाम्बां विससर्ज राज्याद्।।8।।

समागताऽम्बा वरवर्णिनी सा
पुरं च शाल्वाधिपतेस्तदानीम्।
उपेत्य राजानमुवाच वाक्यं
प्रभो! त्वदर्थं समुपस्थिताऽस्मि।।9।।

स्मयन् सकामामपि शाल्वराजो
जगाद नाहं वरवर्णिनि! त्वाम्।
विनिर्जितां भीष्मपितामहेन,
कदापि भार्यार्थमुपावहिष्ये।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रसह्य नीताऽन्यनृपेण युद्धे
त्वमस्यतो नोद्वहनं त्वदीयम्।
कदापि कुर्यामिह याहि काले
यथेष्टमासाद्य भजस्व सुभ्रु।। 11।।

अनङ्गपीडां दधती तदाम्बा,
महीपतिं प्राह न कार्यमेवम्।
त्वया बिना नान्यमहं भजिष्ये
बलेन नीताऽऽसमहं तदानीम्।। 12।।

भजस्व मां शाल्वपते! स्वपत्नीं
सदानुरक्तां त्वयि चाथ बालाम्।
प्रशस्यते धर्मतयाऽपि नात्र
स्त्रियः परित्याग उतानुसक्ताम्।। 13।।

अहञ्च गाङ्गेयमवोचमित्थम्
मनः स्थितो मेऽस्ति हि शाल्वराजः।
अनुज्ञया तस्य रणोन्मदस्य,
तवान्तिकं प्राप्य मुदा स्थिताऽस्मि।। 14।।

न चान्यमिच्छामि कदापि वाचम्
निशम्य शाल्वो न तुतोष भीतः।
बिभेमि भीष्मात्सुमुखि! प्रयाहि
ह्यवैमि भो! भीष्मपरिग्रहाऽसि।। 15।।

पुनः पुनर्गच्छ गृहाच्च शीघ्रम्
अवोचदम्बां प्रति शाल्वराजः।
विदूयमाना मनसा कथंचिद्
पितामहं द्रष्टुमसौ प्रतस्थे।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तपस्विनां साश्रममभ्युपेता
पुराद् बहिर्यत्र निशां निनाय।
शुचिस्मिता वृत्तमचीकथत्तान्
मुनीन् तपश्चर्तुमियेष बाला।। 17।।

तपस्विनामग्रसरस्तदानीम्
गुरुर्द्विजैः साकमचिन्तयच्च।
पितुर्गृहं शाल्वगृहं च यातुम्
अमन्त्रयन् भिन्नधियोऽथ विप्राः।। 18।।

न्यषेधि तां प्रव्रजनाय चाम्बाम्
गुरुर्विचिन्त्याथ महीसुरैश्च।
तदागतस्तत्र वने तपस्वी
भ्रमन् वनान्तेष्वथ होत्रवाहः।। 19।।

निशम्य वार्तामथ कन्यकायाः
पिता स चाम्बाजननप्रदात्र्याः।
उवाच तां मा पितुरालयं त्वं
प्रयाहि ते मातुरहं पिताऽस्मि।। 20।।

विलोक्य मातामहमाश्रमस्थं
कथंचिदम्बा धृतिमादधाना।
विलप्य वृत्तं प्रकटीचकार,
सुतां समाश्वासयदप्रमेयः।। 21।।

स शाल्वराजोऽस्तु पितामहो वा
त्वया पतिश्चाथ विचिन्तनीयः।
विवाहिताश्चैकवरेण कन्या
न चिन्तयन्त्येव जनं तथान्यम्।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विनाशयिष्यामि च तेऽनुतापम्
मयि प्रवर्तस्व च पुत्रिकेऽत्र।
कुठारधारी स तपोनिधिश्च
शमं विधास्यत्यथ ते महात्मा।।23।।

महेन्द्रशैले सततं वसन्तम्
महाबलं चोग्रतपश्चरन्तम्।
मुनीन्द्र–सिद्ध–द्विजसेवितञ्च
समेत्य चाराधय जामदग्न्यम्।।24।।

उदीरिते होत्रवहेऽथ कन्या
निशम्य शान्तिं परमामथाप।
क्षणेऽथ तस्मिन्नकृतव्रणस्य
मुनेः शुभं दर्शनमाबभूव।।25।।

भ्रमन् कुतश्चित्खलु होत्रवाहं
समागतो द्रष्टुमथाश्रमस्थम्।
प्रियः स रामानुचरः प्रसिद्धः
प्रणेमुरायान्तमवेक्ष्य सर्वे।।26।।

शुभाशुभं तस्य मुनेश्च पृष्ट्वा
भृगूत्तमस्यापि शुभान्यपृच्छद्।
समागमश्चापि कदा भवेद्वै
दिदृक्षया भार्गवमत्र वर्ते।।27।।

दिने दिने तस्य पराक्रमाणां
तपः प्रभावस्य च दिव्यचर्चा।
ममाश्रमस्थैश्च विधीयतेऽत्र
कदा स रामो भविताऽक्षिहष्टः।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विलोक्य रामेऽभिरतिं मुनीन्द्रः
तदाऽह वृत्तानि च होत्रवाहम्।
स्मरन् चरित्राणि च पावनानि,
जगाद वाक्यान्यकृतव्रणोऽसौ।। 29।।

भवन्तमेवानुदिनं सखायम्
सभासु वार्तासु कथाप्रसङ्गे।
स्मरन् मुदं याति भृगूत्तमोऽपि
प्रभुश्च मित्रस्मरणानुरागी।। 30।।

प्रभातकाले भविता प्रभुःश्व–
श्चात्रैव मन्ये कुशलानुकांक्षी।
समागमः स्थादथ भार्गवेण
न कः प्रभुं वीक्ष्य भवेत्कृतार्थः।। 31।।

विलोक्य कन्यामकृतव्रणोऽपि
तपोवनस्थां समपृच्छदाशु।
कथं कुतःकस्य कलायुतेयं
सुमध्यमा चात्र वसत्यजस्रम्।। 32।।

यथानुवृत्तञ्च जगाद सर्वम्
स होत्रवाहोऽप्यकृतव्रणाय।
निशम्य भीष्मं खलु दुःखमूलम्
विचारयामासुरुपस्थितास्ते।। 33।।

नृपे सकामा युवती च बाला,
समन्विता सा नवयौवनेन।
निजेच्छितं प्राप्य वरं न कामाद्
परेच्छितञ्चापि जहौ वराङ्गी।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यदा प्रियः शाल्वनृपः पतित्वे
न लप्स्यते साऽवगता शुभांगी।
विहाय कामं जगतीं तदाऽम्बा
इयेष सन्न्यासमुदासचित्ता।।35।।

व्रतञ्च सन्न्यासविधौ रतानां
स्त्रिया वरे नाधिगते यदा स्याद्।
तदा जिहासाव्रतिनां व्रतस्य
भवेन्न सम्यक् व्रजनं गृहाच्च।।36।।

दृढं न वैराग्यमुपैति यावद्
जनेन तावद्व्रजनं न कार्यम्।
विचार्य ते होत्रवहाश्रमस्था
अवोचनम्बामृषयः समेताः।।37।।

पितामहो वाऽस्तु च शाल्वराजः
प्रचोदितः सन् शिरसाऽथ कन्याम्।
ग्रहीष्यति व्रूहि कमिच्छसि त्वम्
मिथोऽवदन् तेऽथ निशा च याता।।38।।

तमांसि विस्फार्य सुवर्णवर्णैः
दिवाकरोऽप्यंशुभिरुद्गतोऽभूत्।
यथा प्रभाते भृगुवंशमुख्यः
तथागतः शिष्यगणैरुपेतः।।39।।

जटाधरो खड्गकुठारधारी
धनुर्धरो वह्निरिवाद्वितीयः।
ज्वलन्निवायं निजतेजसैव
समाययौ विप्रवरो मुनीन्द्रः।।40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विलोक्य चोत्तस्थुरशेषविप्राः
तपस्विनी सा महिताऽपि कन्या।
समेत्य तं प्रांजलयः प्रणेमुः
समर्चयामासुरथार्घ्यदानैः।। 41।।

द्विजाग्रणीः शस्त्रभृतां वरिष्ठः
समर्चितोऽभून्मधुपर्करीत्या।।
सहैव तैः सृञ्जयपार्श्वमेत्य
प्रभुः सुपीठे निषसाद रामः।। 42।।

अपूजयच्चापि स होत्रवाहः
प्रियं मुनिं चात्मगृहाभ्युपेतम्।
न्यवेदयच्चाश्रमवृत्तमस्मै
शुभाशुभं चावदतां मिथश्च।। 43।।

न्यवेदयद्राजमुनिस्तदानीं
यथाऽगताऽम्बा विवशाऽश्रमान्ते।
यथाऽभवत्काशिनृपात्मजार्थम्
पितामहस्यापि कथां तथैव।। 44।।

ततः सुता साऽग्निसमप्रकाशं
तपोनिधिं राममुपेत्य भक्त्या।
ननाम पादाब्जयुगं शरण्यं
मुनेश्च पाहीत्यवदत्प्रपन्ना।। 45।।

पितामहः शाल्वनृपोऽथवा स्याद्
उभौ ममाज्ञावशगाववेहि।
विचिन्त्य मां ब्रूहि कमिच्छसि त्वं
भृगूत्तमः प्राह नतां तदाम्बाम्।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिरस्कृता शाल्वनृपेण साऽम्बा
पितामहं भीष्ममघवीर्यम्।
चिकीर्षती राममुवाच नम्रा
मनोऽभिलाषं निजमाप्तुकामा।।47।।

निशम्य रामोऽपि महीसुरैश्च
समं ययौ भीष्ममथाम्बयाऽपि।
पुरोहितैरग्रगतैश्च सार्धम्
पितामहं वीक्ष्य मुनिः प्रसन्नः।।48।।

समुत्थितो भीष्म उदीक्ष्य रामं
समागतोऽप्यङ्घ्रियुगं ननाम।
सुविष्टरं चार्घ्यविधिं प्रकल्प्य
सभाजयामास गुरुं पुरः स्थम्।।49।।

प्रतापवान् भार्गव इत्थमुद्यत्
स्वपूजनं भीष्मकृतं दधार।
कृतार्थतामद्य गतानि लोके
ममैव पुण्यानि नृपोऽथ मेने।।50।।

जगाद रामः श्रृणु भीष्म! कस्मात्
त्वयेयमम्बेह बलाच्च नीता।
विसर्जिता चापि पुनस्तथैव
पराभिमृष्टां क इमां वहेद्धि।।51।।

त्वयाऽत्र नीतां न हि शाल्वराजः
न चोद्यतः स्वीकरणे कदापि।
विमानितामद्य तवाभिमृष्टं
सुतां नियोगान्मम संवहस्व।।52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पितामहो रामवचो निशम्य
गुरोः सदाज्ञा परिपालनीया।
विचिन्तयित्वाऽपि जगाद सत्यं
यथाऽभवच्चित्रमशेषवृत्तम्।।53।।

गुरो! यदेयं हि मयात्र नीता
पुराऽस्मि शाल्वस्य चगाद चाम्बा।
यदा तदाऽहं गमनाय चाज्ञां
अदाम् गता सौभपुरं प्रतीयम्।।54।।

भयान्न लोभान्न च कामभावाद्
न चापि कोपादथ मोहतो वा।
व्रतं न जह्यामिति धर्मरक्षां
गुरो! करिष्यामि सदा तवास्मि।।55।।

न चेद्वचो मेऽद्य करिष्यसि त्वम्
निहन्म्यमात्यैः सह संगरे त्वाम्।
उवाच कोपाद् स्फुरदग्निदीप्तः
पुरः स्थितं शिष्यममुं स रामः।।56।।

प्रणम्य मूर्ध्ना द्युनदीतनूजः
तुतोष गोभिर्भृगुवंशसिंहम्।
मयेषुविद्याऽधिगता भवत्तः
गुरुर्भवानेव ममास्ति वन्द्यः।।57।।

स रक्तनेत्रो जमदग्निसूनुः
गिरं निशम्याथ भृशं चुकोप।
गुरुञ्च मां त्वं यदि भाषसे तत्
सुतां न कस्माद् परिगृह्यसेऽम्बाम्।।58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तथा ब्रुवन्तं भृगुवर्यमुग्रम्
न भावि चैतद् निजगाद भीष्मः।
न वासवस्यापि भयाद् स्वधर्मं
त्यजामि कच्चित् तदलं श्रमेण।।59।।

प्रसीद! साधो! मयि वा यथेच्छम्
प्रशाधि मां तत्कुरु येन शान्तिः।
त्यजाम्यसून् वा न जहामि धर्मं
करोतु शीघ्रं करणीयमिष्टम्।।60।।

भृगूत्तमस्तं समवोचदेतत्
समुद्यतस्त्वं च रणाय दिष्ट्या।
त्वया कुरुक्षेत्ररणाङ्गणेऽहं
सहाद्य युद्धाय निमन्त्रयामि।।61।।

भीष्मोऽपि वृत्तमथ सत्यवतीं प्रकाश्य
मात्राभिनंदितमतिः कृतनित्यकृत्यः।
श्वेताश्वयुग्रथमधिष्ठितमुद्यतास्त्रः
श्वेतातपत्रकवचेषुवहैरुपेतः।।62।।

स्तूयमानोऽनुगैर्गीतकीर्तिर्बली
चामरैः पाण्डुरैर्वीज्यमानो रथे।
संगरार्थं कुरुक्षेत्रमन्वग्ययौ
शान्तनोः संभवो भूपगेहादयम्।।63।।

क्षत्रबन्धून्निहत्याकरोत्तर्पणम्
सर्वविद्या ददौ शिष्यभावङ्गते।
सोऽयमद्यात्मशिष्येण युद्धोद्यतो
भार्गवः संचिकीर्षुर्वचः पालनम्।।64।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भीष्मजाऽस्ति प्रतिज्ञा दृढा चैकतो
भार्गवस्यापि वाक्यं तथा चान्यतः।
नैव शिष्यो गुरोर्वाक्यरक्षोद्यत
श्चेत्तदा शिष्यगुर्वो रणं केवलम्।।65।।

इत्थं तदा परशुरामपितामहौ द्वौ
युद्धाय बद्धसमयौ ययतुर्विशालम्।
क्षेत्रं कुरोः कुरुपतिः सरथस्तदानीं
विप्रः पदातिरथ भार्गवनन्दनश्च।।66।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये अम्बाचरितं नाम सप्तविंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अष्टाविंशः सर्गः

राजन्यवंशजलधेरथ पूर्णचन्द्रो
भीष्मःप्रयातु मुदितो गुरुमेव योद्धुम्।
देवी तदा भगवती समुपेत्य गंगा
राजानमाह किमिदं कुरुषे ह्यकार्यम्।।1।।

गत्वाहमद्य भृगुवर्यमगाधबोधम्
याचिष्य ईश कुरु मा तनयेन युद्धम्।
शिष्येण सार्धमिह नोचितमस्ति लोके,
भीष्मेण नापि विमतिर्गुरुशिष्ययोश्च।।2।।

साऽभ्येत्य राममिदमाह च भीष्ममाता
भीष्मं निवर्तयितुमेव रणात्स चाह।
शिष्योऽपि योद्धुमिह कामयते तथैव
माता दुनोति सुतमोहतया वराकी।।3।।

भीष्मो ननाम सवितारमुदीर्य मन्त्रान्
विप्रान् समर्च्य जगृहे च शुभाशिषोऽपि।
विप्रं गुरुं युधि विजेतुमयं प्रयाणे
विप्राष्टकानथ मुहुः समतोषयच्च।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूमिष्ठमुल्लसितमाहवपण्डितं तम्
रामं विलोक्य कुरुवंशमणिर्बभाषे।
भूत्वा रथी युधि कदापि पदातिनाऽहं
नैवोत्सहे रणमलंक्रियतां रथेन।।5।।

योद्धुं मयेच्छसि गुरो! यदि युद्धभूमा
वारोह स्यन्दनवरं कवचं बधान।
योत्स्ये तदाऽधिकबलेन रणे त्वयाऽहम्
नान्यायतो युधि विजित्य वहामि गर्हाम्।।6।।

रामो रणाङ्गणगतं तमुवाच भीष्मं
पृथ्वी च मे रथवरो निगमाश्च वाहाः।
वायुश्च सूत इह वर्म च वेदविद्याः
लब्ध्वा रथी प्रभविताऽस्मि न चान्यरीत्या।।7।।

दिव्याश्वयुङ्नवसुवर्णविभूषितश्च
छत्रं ध्वजो कनकचामर एव भाति।
दिव्यायुधान्वितरथः शशिलक्ष्मपूर्णः
प्राप्तस्तदा परशुरामकृतेऽपि युद्धे।।8।।

युद्धाजिरे धृतधनुर्धृतिमान् स धीरः
सारथ्यमस्य कृतवानकृतव्रणोऽसौ।
यो भार्गवस्य दयितो ननु बद्धतूणो
राराज्यते द्विजपतिर्धृतशास्त्रविद्यः।।9।।

शास्त्राब्धिपूर्णशशिरेष भृगूत्तमोऽपि
शस्त्राब्धितर्तुमुदितोऽखिलशस्त्रवेत्ता।
शास्त्री द्विजान्वयतया स्वपराक्रमेण
शस्त्री सदा विजयते जमदग्निशिष्यः।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भीष्मो निरीक्ष्य गुरुवर्यमगाधबोधम्
बाणत्रयेण विनिगृह्य हयान् पुरस्ताद्।
भूमौ निधाय च धनुः स्वरथं विसृज्य
मूर्ध्नाऽनमद् भृगुपतिञ्च पदातिरेत्य।। 11।।

भीष्मोऽभिवाद्य विधिना गुरुमाह वाक्यं
योत्स्ये रणेऽधिकतमेन बलेन बुद्ध्वा।।
धर्मान्वितेन गुरुणा च विशेषतोऽद्य
ह्याशास्व मे जयमतो भवते नमोऽस्ति।। 12।।

भूत्यै त्वयेदमखिलं करणीयमेव
धर्मोऽस्ति चैष समरश्च समं विशिष्टैः।
कृत्वाऽधिगच्छसि यशः कुरु धैर्यमित्थम्
नो चेन्नमेदिह तदा त्वमहं शपेयम्।। 13।।

त्वां जेतुमद्य समरेऽहमिह स्थितोऽस्मि
नाशास्यते तव जयश्च रणाय याहि।
प्रीतोऽस्मि ते सुचरितेन नयेन चापि
धर्मस्य चानुचरणेन न कापि हानिः।। 14।।

भीष्माधिको बलयुतो भृगुनन्दनोऽपि
दातुं यशश्च युयुधे न जघान शिष्यम्।
वात्सल्यतोऽपि निजशिष्यवधं न चैच्छत्
धन्यो गुरुः परशुराममुनिः पृथिव्याम्।। 15।।

ब्रह्मन् विभान्ति च तनौ तव येऽपि वेदाः
ब्राह्मण्यमेव महदस्ति तपश्च तप्तम्।
नाहं निहन्मि तव भूसुरतां कदापि
क्षत्रत्वमेव विनिहन्तुमहं स्थितोऽस्मि।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवं वदन् कुरुपतिर्निशितञ्च भल्लम्
संप्राहरद् भृगुपतिं धनुषोऽस्य छिन्नः।
क्षिप्ता नवैकशतमस्य रथे च बाणाः
भीष्मेण भार्गवतनौ रुधिरप्रवाहः।। 17।।

दृष्ट्वा क्षरन्तमसृगस्य गुरोः शरीराद्
आत्मानमात्मकरणेन विनिन्द्य खिन्नः।
क्षत्रं धिगस्तु च धिगस्तु सुयुद्धमेवं
भीष्मस्तताप हृदयेन विदूयमानः।। 18।।

पापं कृतं बत मयेदमहो शरैश्च
संपीडितो मम गुरुर्द्विजवंशहंसः।
धिग्क्षत्रधर्ममिह यद् गुरुमेव हंतुं
युद्धे स्थितोऽस्मि च यतेऽत्र गुरुं विजेतुम्।। 19।।

नाहं पुनर्निजगुरुं प्रहरामि बाणैः
सन्तप्य शान्तनुसुतः सुतरां मुमोह।
सूर्योऽपि चास्तशिखरं समगात्प्रतीच्याम्
युद्धं तयोः कृतमुपारमताशु रामः।। 20।।

अन्येद्युराहितधनुर्भृगुवंशमुख्यः
प्रातर्युयुत्सुरधिगम्य च युद्धभूमिम्।
दृष्टःस्थितस्तमुपसृत्य कुरूत्तमोऽपि
त्यक्त्वा धनुर्भुवि गतश्च गुरुं ननाम।। 21।।

भीष्मः प्रणम्य गतभीर्युधि सम्मुखस्थः
प्राशंसतास्य गुरुरुग्रपराक्रमञ्च।
नत्वाऽऽगतः कुरुपती रथमारुरोह
वायव्यमस्त्रमयुजद्युधि जामदग्न्ये।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



आयान्तमस्त्रमवलोक्य शमाय तस्य
रामोऽक्षिपत्कुरुपतिं प्रति गुह्यकास्त्रम्।
भीष्मोऽपि भीष्मशरमग्निभवं महास्त्रम्
प्रायूयुजद् भृगुवरे स्वगुरौ रणस्थः।। 23।।

तं वारुणास्त्रमभियुज्य ननाश रामो
भीष्मं चकार युधि सव्यगतस्त्तदानीम्।
शिष्योरसि प्रहितवानिषुमेकमुग्रम्
वीरो रणाग्रशिरसि प्रचुकोप भूयः।। 24।।

तेनास्त्रविक्षततनुः प्रमुमोह भीष्मो
मूर्च्छन्न्यषीददभितश्च रथोत्तमेऽसौ।
सूतश्च तूर्णमुदपावहदाशु युद्धात्
कालान्तरेऽभवदयं किल लब्धसंज्ञः।। 25।।

श्रीरामबाणहतिपीड़ितमानसोऽपि
भीष्मो नुनोद निजसारथिमाहवार्थम्।
सज्जश्च राममभियुद्धभुवं गतोऽसौ
प्राहर्तुमारभत स्वं गुरुमेव बाणैः।। 26।।

व्याप्तोऽपि भीष्मशरवर्षणतोऽपि राम
एकं शरं त्रिभिरथाच्छिनदाशु वीरः।
क्रुद्धो नृपोऽक्षिपदिषुं किल कालसंज्ञं
रामं विजेतुमनुचिन्त्य निहन्तुकामः।। 27।।

बाणं प्रहारहतिमोहतया स रामो
मूर्च्छन् पपात युधि भूमितले विषण्णः।
वाक्यं क्षणेन निजगाद गतव्यथोऽपि
भीष्मं हतोऽसि गुरुणाऽद्य महाबलेन।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



संधाय दिव्यशर एव शरासने स्वे
मुक्तो महाहवगतो नृपतिं स रामः।
सव्येऽपतच्छरवरोऽस्य च सत्यपार्श्वे
आघूर्णितो द्रुम इवाभवदाशु भीष्मः।। 29।।

भीष्मोऽपि बाणमसृजन्निजरक्षणार्थ
येनाहवे बहुशराश्च शरैरुपेताः।
शान्ता मिथो रविरपि प्रययौ तथास्तम्
रात्र्यागमे प्रशमितोऽप्यनयोश्च युद्धम्।। 30।।

दिव्यास्त्रविद्गुरुरयोजयताशु दिव्या
न्यस्त्राणि भूरि समरे च दिने दिनेऽपि।
प्राणान् विहाय नृपतिर्विचकर्त्त सर्वा
ण्यस्त्राणि घोरतुमुलाजिगतश्च भीष्मः।। 31।।

कालार्कदीप्तिसदृशीमिषुसंपरीतां
शक्तिञ्च मृत्युकलितामभिसंमुखस्थाम्।
छित्त्वा त्रिधा च गुरुणा प्रहितां हि भीष्मः
भूमौ न्यपातयदलं विजिगीषयैव।। 32।।

छिन्नां विलोक्य निजशक्तिमसौ महात्मा
रामश्चुकोप रणभूमिगतश्च घोराः।।
शक्तीर्मुमोच रविरश्मिनिभास्तथान्याः
शिष्याय भास्करमिता जमदग्निसूनुः।। 33।।

अग्नेः स्फुलिङ्गनिकरानिव चोद्वमन्त्यो
दिग्भ्योऽभिवर्षणपराः परितो ज्वलन्तीः।
दृष्ट्वाऽगताः कुरुपतिर्विभिदे शरैस्ता
भूयश्चुकोप जमदग्निभवश्च युद्धे।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



घोराः पुनः प्रहितवान् युधि दिव्यशक्ती
यी हेमदण्डसहिता रिपुनाशकर्त्र्यः।
ता जेतुमुत्सुकतया गुरुणा प्रयुक्ताः
प्रापुश्च भीष्ममभितो द्युनदीप्रसूतम्।। 35।।

दीप्ताः शरा निपतिताः शलभावलीनां
शोभामिवाहवगता नृपसम्मुखस्था।
सूतं रथं हयगणं कुरुवंशमुख्यम्,
संच्छाद्य विस्मयतया ददृशुः सुरास्तम्।। 36।।

शिष्यश्चुकोप परिपालयितुं स्वधर्मम्
बाणौघवर्षणपरो विचकर्त बाणान्।
भीष्मो रराज रविवद् द्युपरागमुक्तो
रामश्च रक्ततनुकः शरविद्धगात्रः।। 37।।

युद्धाजिरे कुसुमवानिव शाल्मलिद्रू
रक्ताञ्चितो धृतसुवर्णतनुः सगुञ्जा।
बाणाग्रविक्षतवपुर्भृगुवंशमुख्यः
क्लान्तोऽरमच्च रण एव दिनावसाने।। 38।।

भ्रान्ते रथे प्रहरतां वर एव तिष्ठन्
भीष्मे ववर्ष शरवर्षममोघवीर्यः।
शक्रेरिता गिरिवरे ववृषुश्च मेघाः
तद्वत्तृतीयदिवसो युधि चाभ्युपेतः।। 39।।

रात्रिर्गता प्रहरतोर्गुरुशिष्ययोश्च,
सूर्योदयेऽपि न कृतोऽथ रणे विरामः।
शिष्यो रणान्न विरराम गुरुर्न चापि
युद्धं तयोरिव बभौ च तयोस्तदानीम्।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सन्ताडितः परशुरामशरेण सूतो
भीष्मस्य तद्रथगतो निपपात मूर्च्छन्।
प्राणान् जहावपि मुहूर्ततया विषण्णो
भीष्मोऽपि वीक्ष्य सभयः समरे चकम्पे।। 41।।

अस्मिन् रणे प्रकुपितो भृगुवंशमुख्यः
सूते मृतेऽपि शरवर्षमतीव चक्रे।
भीष्माय बाणनिवहानहिनोत्सपुंखान्
आकृष्य कार्मुकमशोभत युद्धभूमौ।। 42।।

जत्र्वन्तरेऽथ निजघान शरः प्रतापी
भीष्मस्य येन पतितश्च शरेण साकम्।
भूमौ विलोक्य परिवार्य रविप्रकाशाः
विप्राः समेत्य जगृहुः स्वभुजैश्च भीष्मम्।। 43।।

युद्धाङ्गणे परिवृतो खलु चाष्टविप्रैः
भीष्मोऽपि साधुवचसा शुशुभे मुनीनाम्।
मा भैरवोचनमितौजसमेव विप्राः
श्रुत्वोत्थितः कुरुपतिश्च ततर्प वाग्भिः।। 44।।

उत्थाय मातरमपश्यदमंगलघ्नाम्
गङ्गां पुरो रथगतां कुरुवंशमुख्यः।
मूर्ध्ना ननाम चरणौ परिलभ्य चाशी
र्भूयो युयोध जमदग्निभवेन सार्धम्।। 45।।

रामश्च भीष्मशरपीड़ित एव भूमा
वुत्सृज्य कार्मुकवरं प्रमुमोह कृच्छ्रात्।
नीत्वा क्षणं पुनरयं युधि लब्धसंज्ञः
कोपात् स्खलत्तनुरभूच्छरपातलग्नः।। 46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रोषान्महाधनुरयं पुनराददानो
दीर्घं शरं कृतमधिज्यमनेन मोक्तुम्।
मा राम इत्यवदनाशु ततो मुनीन्द्राः
क्रुद्धोऽप्यनंदत वचांसि तदा मुनीनाम्।। 47।।

न प्राहरच्छरममर्षभरोऽपि रामो
मत्वा महर्षिमतमेव हि कालतुल्यम्।
वीरं निहन्तुमभिचिन्त्य स वीरवीरो
वात्सल्यतोऽथ युधि नैच्छदिषुप्रयोगम्।। 48।।

अस्तावलम्बिनि नभस्यदितेस्तनूजे
शान्तोऽनयोः समर एव तदा प्रदोषे।
त्रीण्युत्तराणि ननु विंशदिनानि युद्धे
यातानि धर्मरतयोर्गुरुशिष्ययोश्च।। 49।।

दध्यौ च शान्तनुभवो निशि शान्तबुद्धि
र्नाहं विजेतुमभिराममितः समर्थः।
विप्रो बली मम गुरुर्भुवि सर्वहन्ता
तेजस्विनामपि वरो न मया विजेयः।। 50।।

विप्रान् सुरान् पितृगणान् प्रणिपत्य रात्रौ
भीष्मो दिदृक्षति फलं क्षतविक्षताङ्गः।
जेतुं न जेतुमथवा यदि संभवः स्याद्
स्वप्नेऽप्ययाचत सुरानथ दर्शनाय।। 51।।

विप्राश्च ते युधि रथात्पतितं पृथिव्यां
भीष्मं तदाऽपुरिह चैत्य त एव रात्रौ।
स्वप्ने तमब्रुवनलं च भयेन भीष्म!
जेता भविष्यसि रणे भृगुनन्दनस्य।। 52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मा भैस्त्वमद्य वयमत्र च रक्षितारो
युद्धे भवाम इषुभिर्विजयस्व रामम्।
प्रस्वापनास्त्रमिदमस्ति च विश्ववन्द्यम्
रामोऽपि वेद न हि यं न च कोऽपि लोके।।53।।

अस्त्रं प्रजापतिररीरचदस्य बोधः
कस्यापि नास्तिं कुरुवर्य! सुखेन शेष्व।
सुप्तो भविष्यति रणेऽस्य महत्प्रभावाद्
वीरोऽपि भार्गवकुलार्णवपूर्णचन्द्रः।।54।।

तस्मिन् रणे भृगुपतेरविता न कोऽपि
मत्वाऽष्टविप्रनिवहा मुदिता बभूवुः।
जानन्ति यं न चिरजीवितमस्य लोके
रामस्य ते भुवि वधाय कृताभियोगाः।।55।।

विप्रत्वरक्षणमतिर्द्विजशत्रुहन्ता
यो दस्युनाशकरणाय धृतावतारः।
रामं तमेव युधि भास्वरमूर्तयस्ते
विप्राष्टका मुमुदिरे च वधाय तुल्याः।।56।।

सूर्योदिते भृगुपतिं युधि जेतुकामो
भीष्मो जहर्ष युयुधे भृशमुग्रकर्मा।
लोको रणेन तुमुलेन बभूव भीतः
जातो जगत् सपदि चोद्विजमान एवम्।।57।।

क्रोधोद्यतः परशुराम उवाच भीष्मं
न त्वां त्यजामि रणभूमिगतं पुरःस्थम्।
अद्य प्रशाम्यतु रणो गुरुशिष्ययोश्च
नातः परं जगति चास्त्रमवेक्षितञ्च।।58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्मृत्वाऽनमद् भृगुपतिः प्रजपन् महास्त्रं
ब्राह्मं तदाविरभवद् प्रतिघातबुद्ध्या।
तं प्राहरच्छरवरं कुरुनायकेऽथ
जज्ज्वाल द्यौश्च धरणी प्रदिशो दिशश्च।। 59।।

देवा नरा निशिचरा मुनयोऽथ सिद्धा
हाहाध्वनिं जगति चक्रुरवेक्ष्य भीताः।
दृष्ट्वाऽन्तरं कुरुपतिर्युधि विप्रदत्तं
प्रस्वापमस्त्रमभियोक्तुमथोद्यतोऽभूद्।। 60।।

दिव्यन्तरिक्षगत आविरभूच्च शद्बो
हाहायुतो हलहलासहितः समन्ताद्।
स्त्राक्षीश्च मा कुरुपते भृगुनन्दनाय
प्रस्वापनास्त्रमिह वाक्यमभूद् द्युलोके।। 61।।

देवा दिवि प्रहितमस्त्रमिदं त्वदीयं
रामाय चापि गुरवे न समर्थयन्ति।
भीष्मं बभाण समरे मुनिनारदोऽपि
वाक्यं तथाऽप्यविहितं पितृभिर्नरेन्द्रैः।। 62।।

सद्ब्राह्मणस्तपसि निष्ठमतिर्मनस्वी
ब्रह्मण्यतोऽपि विबुधादृत एव लोके।
क्षत्रान्तको मुनिरयं द्विजपालकोऽपि
प्रस्वापनास्त्रविषयो न च भार्गवोऽस्ति।। 63।।

दर्पोद्धतानखिलशांतिविदूषकांश्च
युद्धे विजित्य धरणीमधिकृत्य पूर्णाम्।
विश्राणितं मुनिगणाय जितां समस्ताम्
प्रस्वापनास्त्रविषयो न च भार्गवोऽस्ति।। 64।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जेयो रणे न दनुजैर्दिविजैर्नरैश्च
शस्त्रैर्महार्हनिवहैरपि शंभुशिष्यः।
यो वैष्णवांशमपि लोकररिक्षयाऽत्र
धत्ते कथं गुरुवरो युधि मारणीयः।। 65।।

दत्वाऽयुधागममशेषमनन्तकीर्ती
रामोऽकरोद् गुरुकृपां विनते स्वशिष्ये।
शिष्यश्च चेद्युधि कलानिपुणो निहन्ति
लोके गुरुं न च लभेदखिलप्रदाता।। 66।।

विद्याः समर्प्य गुरुरेष निजा अशेषाः
शिष्याय मोदसहितो न कथं बभूव।
शिष्यो निहन्तुमुदितः समरे च तेन
बोधेन कष्टमिदमेव च निन्द्यमेव।। 67।।

नाद्य प्रभृत्यवशि कोऽपि गुरुः कदापि
शिष्याय निश्छलतयाऽथ निजं प्रबोधम्।
दास्यत्यतः कुरुपते! कुरु चिन्तनं ते
विद्यागुरुः प्रहरणीय उतानुपाल्यः।। 68।।

किं ते बलं गुरुविनाशकरं जगत्यां
किं ते बलं रिपुविनाशकरं न भूम्याम्।
किं ते बलं गुरुकृपाभरितं न चास्ति
धिक् तं बलं गुरुविघातविधौ प्रयुक्तम्।। 69।।

ऊर्ध्वं विलोक्य दिवि चाष्टमहीसुरांस्तान्
भीष्मः स्थितो द्विजगिरञ्च निशम्य धीरः।
श्रीनारदोक्तिमभिपालयितुं प्रवृत्तः
संचिन्त्य लोकहितमात्महितञ्च युद्धे।। 70।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गङ्गासुतस्तदुपसंहृतवान् महास्त्रम्
ब्रह्मास्त्रमेव युधि तत्र भृशं दिदीपे।
रामो ददर्श पितरञ्च पितामहञ्च
मूर्ध्नाऽनमच्चरणयोश्च रणे पितॄणाम्।।71।।

तृप्तास्तदा पितर ऊचुरिमं विनीतं
धर्मो द्विजस्य भृगुनन्दन! नास्ति युद्धम्।
स्वाध्याय–यज्ञ नियमव्रतसत्तपोभि
र्विप्रो विभाति भुवनेषु सतां वरिष्ठः।।72।।

क्षत्रस्य धर्म इह युद्धविधिः सदैव
भद्रं च तेऽस्तु कृतकार्मुकधारणस्य।
दुर्धर्षमेतदधुनैव विसर्जय त्वम्
तप्यस्व भार्गव! तपो जहि तां युयुत्साम्।।73।।

देवै रणात्कुरुपतिर्विनिवारितोऽद्य
सम्प्रेरितश्च न रणं कुरु भार्गवेण।
रामो गुरुस्तव विजेतुमसौ त्वयाऽजौ
शक्यः कथं ननु निवर्तय संगराच्च।।74।।

पितॄनुवाच परिगृह्य वचांसि तेषां
रामो जगाद वचनं प्रणिपत्य तांश्च।
भीष्मं निवर्तय रणाद् पितरः प्रसन्ना
वाञ्छन्ति चेद्रणभुवो विरतं स्वरामम्।।75।।

मन्ये रणाच्च विरते कुरुनंदनेऽहं
शीघ्रं भवामि विरतो रणकर्मणश्च।
कः स्यात्सुखी पितृगणानवमत्य लोके
वंशे समृद्धिरभितः पितृषूत्सुकेषु।।76।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गंगासुतं प्रति गताः पितरस्तदानीम्
श्रीनारदेन मुनिभिश्च सुरैः समेताः।
ऊचुश्च तात! विनिवर्तनमेव युद्धात्
कांक्षाम नो द्विजगणानथ मानयस्व।। 77।।

भीष्मो जगाद विनयेन समागतांस्तान्
क्षत्रस्य धर्म इह युद्धपलायनं नो।
युद्धात्कदापि विमुखो न भवामि लोके
ह्यभ्याहतश्च विशिखैरपि मृत्युकल्पैः।। 78।।

अष्टग्रहानिव नभस्युदितान् विलोक्य
दीप्तान् द्विजोत्तमगणाननमच्च भीष्मः।
तेऽप्यब्रुवन् युधि कुरूत्तम याहि रामं
भीष्मव्रती गुरुरथो तव शं विधेहि।। 79।।

भीष्मो निवर्तितमवेक्ष्य गुरुञ्च रामं
युद्धान्न्यवर्तत च लोकहितं विदध्यौ।
गत्वान्तिकं भृगुपतेर्भृशविक्षताङ्गः
भीष्मो ननाम चरणौ स्वगुरोर्विनीतः।। 80।।

शिष्यं पुरःस्थमवलोक्य नतं तदानीम्
रामोऽप्युवाच बहुभक्तिपरिप्लुताङ्गम्।
नो क्षत्रियस्त्वदपरो भुवि वीरतायां
संतोषितोऽस्मि भृशमद्य रणे त्वयाऽहम्।। 81।।

पुनः पुनः शिष्यगुरू ननन्दतुः
प्रणम्य चाशीः परिगृह्य निर्भयः।
पितामहोऽगाद् गजसाह्वयं बली
समाययौ स्वाश्रममेव भार्गवः।। 82।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भीष्मोऽपि विप्रकृपयैव गुरुच् विप्रं
प्रातोषयद् युधि तदा जगृहे न चाम्बाम्।
साऽप्यन्यजन्मनि बभूव रणे शिखण्डी
यं वीक्ष्य शस्त्ररहितोऽपि हतश्च भीष्मः।।83।।

रामः प्रतिज्ञामकरोत्तदैव
शिष्यो न मे क्षत्रियवंशजन्मा।
लोके भविष्यत्यत एव कर्णः
शिष्यो बभौ गुप्तवपुस्तदानीम्।।84।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये गुरुशिष्यसंगरम् नाम अष्टाविंश सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# एकोनत्रिंशः सर्गः

गिरौ महेन्द्रे निवसन् भृगूत्तमः
तपश्चरन् शास्त्रमुदीरयन् सुधीः।
समागतेभ्यश्च निजाश्रमस्थितो
ह्युपादिशच्छस्त्रकलाम् निरन्तरम्।।1।।

अगाधबोधान्वितशास्त्रवैदुषीम्
महीसुरा राममुपेत्य चापपुः।
कलाः समग्राश्च विवाद–वादयो
र्जिगीषया संयति चापठन् मिथः।।2।।

मुनिस्तदा स्वाश्रमवासिनाङ्कृते
सुवेदवेदाङ्गपुराणसम्मिताम्।
ददाति विद्यामखिलां सुवेदवित्
सुनीतिधर्मव्यवहारपूर्विकाम्।।3।।

प्रशान्तमासीनमुदारदर्शनम्
दृशा ह्यमित्रघ्नमशेषवन्दितम्।
उदात्तदान्तादिगुणैर्विभासितम्
महेन्द्रशैले निवसन्तमुन्नतम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपास्यमाना भृगुनन्दनं गुरुं
भवन्ति तुष्टा निगमान्तदर्शिनः।
स्वभावतश्चाश्रमवासिनः सदा,
वसन्ति शिष्या मुदिता गुरोः प्रियाः।।5।।

पठन्ति केचिद् द्विजशास्त्रपद्धतिम्
तथा धनुर्वेदमथापरे जनाः।
क्रमेण संगृह्य च शास्त्रचातुरीम्
भवन्ति शास्त्रार्थकलासु कोविदाः।।6।।

क्वचिद्वनं भार्गवशासितं प्रधीः
समाययौ द्रोणमुनिर्वृतोऽनुगैः।
ननाम रामस्य पदाब्जयुग्मकं
बभाण स्वं ख्यापयनात्मसंयमी।।7।।

जनिर्भरद्वाजकुले महीतले
जनैः सदा द्रोण उदीरितोऽस्म्यहम्।
निशम्य वैदुष्यमगाधबोधदम्
प्रभो! प्रपन्नोऽस्मि च मां प्रशाध्यलम्।।8।।

न केवलं शास्त्रविचारकौशलम्
ममेप्सितं शस्त्रविधानबोधनम्।
न चान्यआस्ते भवता समो भुवि
गुरुश्च दक्षो ह्युभये नये भवान्।।9।।

प्रणम्य भूमौ शिरसाऽथ वेदविद्
द्विजाग्रणीर्द्रोणमुनिश्च पादयोः।
भृगूत्तमस्याह च देहि मे धनम्
यशो निशम्याद्य भवामि याचकः।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रुतो मया दानविचक्षणो गुरुः
श्रुतश्च विप्रान्वयरक्षको मुनिः।
श्रुतस्तथोदग्रविशारदो रणे
श्रुतः श्रुतेर्मूर्तिरिवाद्य ते नमः।। 11।।

धनप्रदानाय रतं तपोधनम्
महारणे शौर्यपरायणं वरम्।
अकामिनां कामदमुग्रतेजसम्
भृगूत्तमं भूरि धनं मुदाऽर्थये।। 12।।

निशम्य याच्ञां समुवाच भार्गवो
न मेऽद्य किंचिद् वसु वर्तते द्विज।
उपार्जितं दत्तमशेषमर्थकम्
द्विजेभ्य एवास्मि शरीरमात्रकम्।। 13।।

पुरा समग्रा चससागरा धरा
सपत्तना साद्रिकुलाऽचला मया।
विसर्जिताऽवाप्य हि कश्यपाय सा
वृणीष्व च द्रोण! धनान्तरं क्वचिद्।। 14।।

महार्हशस्त्रास्त्रसमन्विताऽखिला
विभान्ति विद्या विविधा मयि स्थिताः।
प्रयोग–संहार–पुरःसराण्यलं,
स्थितानि शस्त्राणि च सन्ति केवलम्।। 15।।

ततोऽब्रवीच्चाङ्गिरसः कुलोद्भवो
महारथी द्रोणमुनिर्भृगूत्तमम्।
प्रभो न कांक्षामि धनं विगर्हितम्
रणार्णवार्थं बहु वित्तमर्थये।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अशेषतो देहि रहस्यपूर्वकम्
प्रभोऽद्वितीयं धनमस्त्रसम्मितम्।
प्रयोगसंहारसमन्वितं रणे
विषीदति प्राप्य न यद् क्वचिज्जनः।।17।।

तपोभिरासादितकर्मवैभवं
यशोभिरावर्जितशीलसौभगम्।
मनोभिराकृष्टयमानुशीलनम्
वचोभिराद्योतितकर्म चाश्रये।।18।।

स एवमभ्यर्थितकौशलो मुनि
र्ददौ धनुर्वेदमशेषमुत्तमम्।
मुदा भरद्वाजसुताय चार्थिने
नताय च द्रोणवराय भार्गवः।।19।।

समग्रहीन्मन्त्रविदोऽथ मन्त्रविद्
मुदाऽऽयुधान्येव च जामदग्न्यतः।
प्रदर्शयामास तथास्त्रलाघवम्
गुरोरधीतं गुरुसन्निधौ सुधीः।।20।।

अवासृजद् वह्निमथाग्निजास्त्रतः
पयस्तथा वारुणसंप्रयोगतः।
प्रभञ्जनं वायुशरेण संयतः
समासृजच्चास्त्रविदेषु वीर्यवान्।।21।।

घनांश्च पर्जन्यशरेण सोऽसृजद्
धरातलं प्राविशदेष भौमभृद्।
तिरोहितास्त्रेण तिरोहितोऽभवद्
प्रदर्शयन् चायुधलाघवं तदा।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरुः कुरूणामथ भार्गवान्तिकाद्
मुदाग्रहीच्चास्त्रविधेः सु–कौशलम्।
प्रशंसितो द्रोणमुनिःसभान्तरे
भृगूत्तमेनापि सभासदैस्तथा।।23।।

प्रणम्य रामं जमदग्निसंभवम्
गुरुं धिया द्रोणमुनिर्महास्त्रविद्।
स्वलंकृतोऽभूदखिलास्त्रविद्यया
गुरोस्तथाशीर्भिरभूद् विशारदः।।24।।

स चास्त्रविद्याप्रभया महोद्यतो
महारथो द्रोणगुरुः प्रकाशितः।
समाययौ वेदविदां वरो रणे
स्मरन् गुरोः स्नेहविधिं शनैः शनैः।।25।।

अरिन्दमः शक्रसखा महास्त्रविद्
बभूव शिष्यो भृगुनन्दनस्य यः।
स देवदूतः प्रवरः प्रभावविद्
रणेऽप्यवध्यश्च सुरासुरैरसौ।।26।।

महीसुरोऽसौ युधि वृष्णिवंशजैः
सदा ह्यवध्योऽस्त्यनुचिन्त्य तां पुरीम्।
ययौ च हर्तुं खलु पारिजातकम्
निवारितः सात्यकिना रथस्थितः।।27।।

अरिन्दमस्यापि च रामशिष्यताम्
गतिं प्रवृत्तिं परिकल्प्य चाहवे।
पुरैव कृष्णेन विबोधितः पुरे
स सात्यकिर्येन पुरी सुरक्षिता।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कदाचिदाजौ विजिगीषयाऽर्जुनम्
ययौ गुरुं द्रोणमुदात्तकौशलम्।
प्रशिक्षितं ह्यायुधशास्त्रमुल्बणम्
स कर्णनामा रविजोऽपि सूतजः।। 29।।

बलं च भीमस्य युधिष्ठिरस्य धीः
सुलाघवं पार्थभवं विभूषितम्।
विनम्रताऽस्ते यमयोश्च संस्थिता
तनौ च यस्यायमभूत्स कर्णकः।। 30।।

अदह्यतायं वसुदेवसूनुना
यतोऽर्जुनेनास्ति च तंस्य मित्रता।
प्रजानुरागं प्रविलोक्य भूतले
दिने दिने कर्णमतिः प्रदूषिता।। 31।।

सुयोधनेनानुचकार मित्रताम्
स्वभावतो विद्विषति स्म पाण्डवान्।
करोति कर्णोऽपि तथैव विप्रियम्
स कौरवाणां प्रियतामुपागमत्।। 32।।

धनञ्जयं वीक्ष्य बली स्वतोऽधिकम्
रणागमे शस्त्रविधौ च शिक्षणे।
रहस्युपागम्य गुरुं न्यवेदयत्
वचांसि च द्रोणमुनिं स सूतजः।। 33।।

प्रयोग–संहार पुरस्सरं रणे
महास्त्रमिच्छामि च वेत्तुमाशुगम्।
जिगीषया व्रह्मभवं नियंत्रितुम्
न शक्यते यच्च सुरासुरादिभिः।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यदा मयि व्रह्मभवं महास्त्रकम्
स्थितं भविष्यत्यथ शत्रुनाशकम्।
तदाऽर्जुनेनाथ समं रणाजिरे
भवेयमित्यस्ति मतिर्ममास्थिता।। 35।।

निशम्य कर्णोक्तिमसौ तदर्थविद्
परावरज्ञाननिधिः कुचेष्टितम्।
व्यचिन्तयद्राजगुरुस्तथार्जुने
दुरात्मबुद्धिं ह्यवगत्य चाब्रवीत्।। 36।।

महीसुरः स्याच्चरितव्रती सदा
भवेत्तपस्वी यदि वा महीपतिः।
ततः स विद्यादखिलायुधोत्तमं
न चान्यथा ब्रह्मभवं महास्त्रकम्।। 37।।

स भानुजो द्रोणगुरुं विहाय तम्
जगाम रामं जमदग्निसंभवम्।
महेन्द्रशैलं प्रति चार्जुनं द्विषन्
जिगीषयाऽभूत्कपटी महीसुरः।। 38।।

प्रणम्य मूर्ध्ना भृगुवर्यपादयोः
बभाण कर्णो भृगुवंशजोऽस्म्यहम्।
जुगोप जातिं निजगोत्रमिष्टकृत्
प्रतिज्ञया भीतमतिर्गुरोस्तदा।। 39।।

कदापि लोके कपटेन यंत्रितो
गुरुं न मिथ्यावचनैश्च तर्पयेत्।
न गोत्रजात्योरपि गोपनं क्रियेत्
यतो न शिष्यो लभते क्वचिद्यशः।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरुः स रामः परिगृह्य सूतजं
वचोऽभवत्प्रीतियुतश्च शिक्षणे।
मुदा महास्त्रं च ददौ विधानतो
नताय तस्मै कपटानुवर्तिने।।41।।

सदेवगन्धर्वनिशाचरा नरा
विलोक्य भीताश्चकिताश्च सर्वथा।
महास्त्रमेतद् भृगुवंशकेतुना
कथं कुपात्राय च दत्तमुत्तमम्।।42।।

पराक्रमं चोग्रतपस्तपस्विनां
वरे च रामे प्रविलोक्य सर्वतः।
न कोऽपि रामं छलवृत्तिसेवनं
ह्यभाषतागत्य च कर्णकल्पितम्।।43।।

भृगूत्तमोऽरण्यनिवासमादधन्
बभौ स विश्रम्भतया गुरोःप्रियः।
न सेवकानां कपटानुचिन्तनम्
कदापि कुर्वन्ति धिया हि सज्जनाः।।44।।

रथी स कर्णो जलधेस्तटे स्थितः
निजाश्रमाभ्याशगतो भ्रमन् वने।
अथाग्निहोत्राभिरताग्रजन्मनो
जघान धेनुं क्वचिदेव हेलया।।45।।

यदृच्छया ब्रह्ममतेः पयस्विनी
विघातिताऽज्ञानतया मया प्रभो!।
न्यवेदयद् ब्राह्मणमेत्य भीतधीः
निशम्य विप्रः प्रचुकोप तत्कृतम्।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुहुर्मुहुर्विप्रममुं प्रसादयन्
यथैव कर्णः स्वकृतप्रकाशने।
रतस्तथैवातितताप भूसुरः
शशाप धेनोर्वधदुःखपीडितः।।47।।

त्वया प्रमत्तेन यथैव गौरियं
हता तथैवान्यजनो रणस्थले।
शिरस्तनोस्तेऽपि निपातयिष्यति
प्रमत्तवत्कोपि न मे वचो मृषा।।48।।

त्रिलोकमध्ये श्रृणु कर्ण! दुर्मद!
न कोऽप्यसत्यं मम वाक् विधास्यति।
वितिष्ठ याह्याशु कुरु स्वकर्म वा
यथेच्छया त्वं परिलप्स्यसे फलम्।।49।।

दमेन कर्णस्य पराक्रमेण च
प्रतोषितोऽ भूद् गुरुसेवया वा।
भृगुप्रवीरो विनताय चाश्रमे
ददावशेषायुधमन्त्रपद्धतिम्।।50।।

यथोप्सितं प्राप्य रणास्त्रशिक्षणम्
निनाय कालं च मुनेः शुभाश्रमे।
वसंश्च सार्धं भृगुनन्दनेन सः
सुधीस्तु कर्णो रममाण आसीत्।।51।।

क्वचिन्मुनीशोऽ प्युपवासकर्शितो
गुरुस्तु सुष्वाप निजाश्रमस्थितः।
प्रजातविश्रम्भतया क्लमान्वितः
शिरोऽथ कर्णाङ्कगतं व्यधादयम्।।52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुरुश्च विश्रान्तमनाऽस्वपद् भृशम्
क्वचित्कृमिः श्लेष्ममयो व्यदृश्यत।
स मांसरक्ताशनलोलुपः क्षणाद्
विभेद कर्णोरुगतश्च पीडयन्।।53।।

प्रपीडनासह्यतयाऽसहद्वली
गुरुप्रबोधानुमिताधिशंकितः।
गुरोर्भयाद् वेदनयाऽपि विह्वलः
स सूतजो धीरतया ससाह तद्।।54।।

ततश्च कर्णोरुविभेदनादसृक्
प्रवाह संस्पर्शविबुद्धभार्गवः।
तताप विज्ञाय च कर्णमादिशद्
यथाऽभवद् ब्रूहि तथा च निर्भयः।।55।।

उवाच कर्णोऽपि कृमेर्निकृन्तनम्
गुरोश्च निद्रापरिबोधनाद् भयम्।
विचार्य तं सूकरसन्निभं कृमिम्
ह्यदर्शयच्चापि तपस्विने पुरः।।56।।

स चाष्टपादो बहुतीक्ष्णदन्तभृद्
समावृतः सूचिभिरुत्कटाननः।
कृमिर्निरुद्धांग इवाशु रोमभिः
जहावसून् रामदृशैव दुर्जयः।।57।।

स विश्वरूपो ह्यसितांगधृक्तनुः
करालमूर्तिर्नवमेघवाहनः।
सुलोहितग्रीव इवैष राक्षसो
ह्यलर्कनामा ददृशेऽन्तरिक्षगः।।58।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विलोक्य रामं खलु पूर्णमानसः
कृमिर्बभाषे च कृताञ्जलिस्तदा।
मुनेः स्वलोकं प्रति यामि मोचितः
त्वया भवेत्स्वस्ति भृगूत्तम! प्रभो!।।59।।

व्रवीहि कस्त्वं नरकं प्रपद्यसे
महासुरोऽहं दयितापहारकः।
भृगोर्बलाच्छापतया कृमेर्वपुः
ममेदमद्यास्मि विमोचितस्त्वया।।60।।

मया भृगुःशापविमोक्तुमर्थितो
यदा तदोवाच स शापमोक्षणम्।
कुलेऽत्र रामो भविता विलोक्य तं
विशोकता स्यान्मम चाद्य ते नमः।।61।।

त्वया विमुक्तोऽस्मि च पापयोनितः
समागमात्पुण्यतमेन साधुना।
यथा कृतं भुक्तमहो कदर्थितम्
परावरायाद्य नमोऽस्तु ते ह्रदा।।62।।

दिवि प्रयाते च महासुरे तदा
सुदुःखमेतद् सहते न भूसुरः।
क्वचिद् विचिन्त्याह च पार्श्वसंस्थितं
विलोक्य रामः खलु कर्णमीदृशम्।।63।।

न जातु पीडामतिधैर्यदुःसहाम्
सहेद् द्विजः क्षत्रियधैर्यमीदृशम्।
भवेदतःकर्ण! ममाशु तत्त्वतः
किमस्ति सत्यं तव जातिरुच्यताम्।।64।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रसादयन् शापभयाच्च भार्गवम्
प्रवेपमानो भृगुवर्यमानतः।
जगाद कर्णश्च महास्त्रलुब्धकः
प्रपाहि मां भार्गव! संप्रसीदताम्।।65।।

अवेहि राधेयमिमञ्च कर्णकम्
रवेश्च कुन्त्यामिह सज्जनिर्मम।
न विप्रता क्षत्रियताऽपि नो भवेद्
मयाऽस्त्रलोभात्कृतमद्य रक्ष्यताम्।।66।।

पिता गुरुर्मेऽस्ति न संशयः क्वचिद्
मयोक्तमस्माद् तव गोत्रमुत्तमम्।
सुवेदविद्यास्त्रतया तव स्थितिः
मयि प्रभोऽस्त्यद्य च भार्गवोऽस्म्यहम्।।67।।

कृताञ्जलिं भू–पतितं तमानतम्
प्रवेपमानञ्च बभाण भार्गवः।
सरोषतोऽपि प्रहसन्निवाश्रितम्
महास्त्रलाभाय कृतोद्यमं तदा।।68।।

कृतेऽपि मिथ्याचरणेऽस्त्रलोभत
स्त्वयि स्थितं ब्रह्मभवं महास्त्रकम्।
न मृत्युकाले भविता सहायकृद्
रणे तथेदं प्रतिभास्यति ध्रुवम्।।69।।

रणांगणे क्षत्रभवस्त्वया समो
न कोऽपि वीरो भविता पराक्रमी।
तथापि मिथ्याचरणान्महास्त्रभृद्
त्वमप्यनिष्टां लभसे हतिं मृधे।।70।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवं छलेन भृगुनन्दनतो महास्त्रं
कर्णो ह्यवाप परमास्त्रविधौ प्रवीरः।
रामोऽपि निर्वृत इवाश्रमशिक्षणेन
दत्तात्रयं समधिगम्य तपश्चकार।। 71।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये रामविद्याप्रदानं नामैकोनत्रिंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# त्रिंशः सर्गः

व्राह्मं क्षात्रं संविधायाथ कृत्यं
कर्णस्येत्थं जाति संगोपनञ्च।
कृत्वाऽयोग्यं जातविश्रम्भवृत्या
भूयो भूयो जामदग्न्यः शुशोच।।1।।

शस्त्रं शास्त्रं संप्रदायापि लोके
नायं शिष्यैश्चाथ तोषं दधार।
भीष्मेणाभूत्संगरं भार्गवस्य
कर्णोऽप्यासीच्छद्मवृत्या विनम्रः।।2।।

वीरो भूत्वा पर्शुरामो विरक्तः
प्राप्तः शैलं संभ्रमन् गंधमादम्।
ज्ञात्वाऽलर्काद् दत्तदेवं दिदृक्षुः
दत्तावासश्चापि संवर्त्तनाम्ना।।3।।

श्रुत्वा गुप्तं वेषतो वृत्तितस्तं
छन्नाचारं वीक्ष्य तं पुत्रमत्रेः।
दूराद् देवं भार्गवस्तं विदित्वा
भक्त्या नत्वा प्राङ्मुखस्तत्र तस्थौ।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सन्न्यासी यश्चावधूतस्य वेषं
कृत्वा शेते दिव्यपर्यङ्कध्ये।
वारस्त्रीभिर्यस्य पादौ व्रियेते
रामाभिस्तस्योह्यते मद्यपात्रम्।।5।।

स्वर्णे कुंभे संस्थितं मद्यमुद्यत्
माणिक्यस्यामी तु पात्रेण–नीत्वा।
दत्तात्रेयं पाययन्त्यः पुरस्ताद्
कुर्वन्त्यो मारक्रियां संस्थिताश्च।।6।।

दृष्टं मर्शं तद्वपुःकामिनीभिः
स्मारं स्मारं चात्रिसूनोस्तपस्याम्।
दध्यौ द्वारे वीक्ष्य तत्सारमेयम्
ज्ञाताश्वासो भार्गवस्तं विवेद।।7।।

दृष्ट्वा नत्वा भार्गवः पार्श्वमेत्य
दत्तात्रेयं सोऽथ तं प्राह वाक्यम्।
तप्त्वा चोग्रं त्वादृशाः पुण्यशीलाः
कस्मान्मूढं मामिहायान्ति देव!।।8।।

सन्न्यासी भूत्वाऽप्यहं भोगलीनो
जिह्वोपस्थौ मे रतौ स्तः स्वभोगे।
हित्वा मां दासं ह्यपेहीन्द्रियाणाम्
नैवान्ये मे भो! समायान्ति पार्श्वम्।।9।।

स्पृष्ट्वा मां वायुः स्पृशत्यन्यमिष्टम्
लोके चेत्ते पापतां यान्ति मन्ये।
दूरं याह्यस्मात्पापमूढात् तपस्विन्
कस्मान्मग्नं भोगसिन्धौ श्रयेस्त्वम्।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दत्तात्रेयस्यास्ति लीला विचित्रा
दृश्यं रामो वीक्ष्य चैतत् सुगर्ह्यम्।
ब्रूते धृत्वा पादयुग्मं मुनेश्च
क्वाहं मन्दः क्वास्ति माया त्वदीया।। 11।।

दत्तात्रेयस्त्वं मुनीन्द्रैरुपास्यो
देवैरीड्यो भूर्भुवः स्वस्त्वमित्थम्।
एकत्राख्या ब्रह्मविष्ण्वोः शिवस्य
त्वत्तः सर्वाः सिद्धयो नाप्यभिन्नाः।। 12।।

संवर्त्तेनाहं पुरा सूचितोऽस्मि
वृत्तं ते दृष्टं तदाश्चर्यपूर्णम्।
गोपायित्वा मां कथं हातुमुत्को
भक्त्या शान्त्यै तेऽन्तिकं चागतोऽस्मि।। 13।।

निर्वेदाधिक्यात् तत्तपश्चारणाच्च
स्वान्तर्वृत्तेर्वाति कालुष्यतश्च।।
ज्ञातं सर्वं दत्तचारित्र्यशीलम्
नान्तः पूताः क्वापि खेदं भजन्ति।। 14।।

पादान्तस्थं भार्गवं संपरीक्ष्य
स्वानन्दाश्रूण्यासृजद् दत्तमूर्तिः।
कारुण्यात्मा शिष्यबुद्ध्यागतं तं
प्रेम्णाऽऽलिङ्गयाशीर्भिरुरीकृतश्च।। 15।।

लोके ख्यातः सर्वविद्यावदातो
युद्धे जातः सर्वजिच्चाप्रमेयः।
शंभोर्विद्याश्चायुधानीह वेत्ता
मन्त्रैरिद्धस्त्वं मम प्रीतिपात्रः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पित्रा दत्तं शम्भुना चापि दत्तं
वेदज्ञानं नित्यमभ्यस्य विद्वान्।
शस्त्री शास्त्री भूरि तेजोभिरिद्धो
रामो भूर्दत्वा द्विजाग्र्यो बभूव।।17।।

सत्यं जाने वत्स! शान्त्यै सदैव
नान्यो योगो ज्ञानयोगं बिना स्याद्।
अन्तः शान्तिर्नैव युद्धात्कदापि
विद्याभिर्नो लभ्यते शान्तिरिष्टा।।18।।

प्राणिष्वन्तः संस्थितं सूक्ष्मतत्त्वं
साक्षात् ख्यातः श्री शिवः सत्परश्च।
सर्वेष्वन्तो भासमानं समानम्
मोहाल्लोके नास्ति तद्भासमानम्।।19।।

कामिष्वन्तर्नो स्फुरन् भासते तद्
मायागूढं चाम्बयैतच्चकास्ति।
दत्तात्रेयः प्रश्नमालोत्तरैश्च
ब्रह्मज्ञानं भार्गवायाप्यदात् स्वम्।।20।।

गुरुशिष्यगतानि वचांसि तदा
त्रिपुरेति रहस्यमभूदखिलम्।
भृगुनाथकृतेऽत्रिसुतेन परा
ललिता सुभगा भुवि लब्धपदा।।21।।

गुरुणा प्रतिपादितमात्मगतं
नवबोधमधत्त च राममुनिः।
जमदग्निभवास्त्रिपुरार्चनतो
भुवि सिद्धिमगादथ मुक्तिमलम्।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जपनादभिषेककृताचरणाद्
भुवि भुक्तिरलं च विमुक्तिरहो।
उभयं लभते त्रिपुरार्चनतो
गुरुदर्शितमार्गरताः सुजनाः।। 22।।

श्रीविद्यायाः पूजनात्सेवनाद्वा
दिव्यार्चायाः संविधानाद् विधानाद्।
श्री विद्यां साधका भुक्तिमुक्ती
प्राप्त्वा मोदन्ते भूतले दीक्षिताश्च।। 23।।

एवं तदा परशुरामकृते नवाध्वा
दत्तेन चात्रितनयेन भुवि प्रकीर्णम्।
अद्यापि भोगसहितञ्च विमुक्तिमार्गं
संश्रित्य साधकजना मुदिता भवन्ति।। 24।।

दत्तात्रयः परशुराममुनिं विलोक्य
गुप्तोऽपि गुप्तविषयां ललितां सुविद्याम्।
प्राकाशयत् मुनिजना नितरां भजन्ति,
सेवारताः श्रियमनन्तगतिं लभन्ते।। 25।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये श्रीविद्याग्रहणम् नाम त्रिंशः सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# एकत्रिशः सर्गः

दत्तात्रयान्तिकमयं न्यवसन् यतीन्द्रः
श्रीविद्ययाञ्चितमतिः शिवभक्तिनिष्ठः।
चक्रे तदा परशुरामसुकल्पसूत्रम्
श्रीगन्धमादनगिरिं समसेवतापि।। 1।।

कालं निनाय गुरुणाऽत्रिसुतेन सार्द्धम्।
किंचित्पुनर्निजगिरिञ्च महेन्द्रनाम।
प्राप्याभवद् द्विजमतिश्च शुभाश्रमस्थो
ध्याने जपे तपसि लीनमतिर्जितारिः।। 2।।

आत्मावबोधविधुताखिलमोहराशि
र्विद्यावदातविभयाऽहृतगूढ़दर्पः।
ध्यानात्तमांसि करणेषु च संस्थितानि
दूरीकृतानि चिदचिन्मनने स्थितोऽभूद्।। 3।।

ध्यायन् सदा परमभास्वरभास्करांशुम्
गायन् सुगीतगुरुगौरवमत्युदारम्।
कुर्वंश्च तन्त्रविहितार्चनमादिदेव्या
हृष्यञ्च पाठयति शिष्यजनान् प्रसन्नः।। 4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अध्यापयन् पठति याजयति स्म यज्वा
दत्वा परिग्रहरतोऽप्यपरिग्रही सः।
त्रैविद्ययोपचिततत्त्वचणोऽपि धीमान्
विद्यास्वधिष्ठितमतिर्यतिराट् तपस्वी।।5।।

अष्टाङ्ग–योग–परिपालनवृत्तिनिष्ठः
सच्चित्तवृत्तिसहितो गतचित्तवृत्तिः।
तत्त्वं स्फुरद् हृदि विचिन्तयति प्रकामम्
ज्योतिर्निवातगतमात्मगतं विदध्यौ।।6।।

सायन्तने सवितुरर्चनकालयाते
वेद्यग्निहोत्रविधिपूरितशिष्यलोके।
भास्वानिवापरतनुर्जमदग्निपुत्रो
रेजे सदोपनिषदां वचनानि दित्सुः।।7।।

शिष्यः क्वचिज्जनकदेशभवः सभायाम्
प्राविविशद् गुरुपदार्पितसत्प्रणामः।
लब्ध्वा वचो भृगुपतिं समुवाच काले,
सीताविवाहकथने शिवचापभङ्गः।।8।।

श्रुत्वा तदा भवशरासनभङ्गवार्ताम्
रामः पुनः परिशुशोच सविस्तरेण।
विज्ञाय शिष्यकथनादपि चापभङ्गम्
रामं दिदृक्षुरयमाश्रमतश्चचाल।।9।।

दध्यौ पिनाकधनुषो भुवि नास्ति भङ्क्ता
साधारणो न च नरोऽस्ति विभंजकोऽस्य।।
चेच्छ्रीधरः समुदितस्तदहं नमेयम्
नो चेत्तदा स निहतो भविता रणे मे।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मार्गे चलन् परशुराममुनिर्विदध्यौ
प्राप्तः सुखेन रघुवंशनृपाधिवासाम्।
दिव्यां सुरैरपि नुतां नगरीमयोध्याम्
स्नात्वा प्रणम्य सरयूं च समागतोऽभूद्।। 11।।

श्रीनारदो हरिविकुंठगतः कदाचिद्
श्रीरागमेव समगायदशेषभक्त्या।
श्रीराशु तत्र गलिता द्रवतामयासीत्
श्री विष्णुनेत्रयुगलात् सरयूरभूच्च।। 12।।

वन्दामहे धृततनुं सरयूं सुलक्ष्मीं
रागान्वितानपि विरागगतिं प्रदात्रीम्।
रामप्रिया जगति तामिह सेवमानाः
सद्यो भवन्ति नियमेन यमं न यान्ति।। 13।।

मातर्जले सुविमलेऽप्यवगाहनेन
जन्मान्तरैश्चितमलं प्रविनाशमेति।
सीतापतिः सपदि तस्य हृदि प्रविष्टः
स्वां भक्तिमेव च ददाति नमोऽस्तु तुभ्यम्।। 14।।

त्वां सेवनाय सततं च धृतव्रता ये
सद् ब्राह्मणाश्च निजकर्मणि सन्ति लीनाः।
साकेतधाम्नि वसितुं निरताश्च नित्यम्
ते रक्षिताः रघुपतेः कृपयैव सर्वे।। 15।।

पारंगतो निगमराशिषु धर्मवृत्तिः,
पारंगतो भृगुपतिः सरितः सरय्वाः।
पारंगतोऽपि भवबोधविधासु शश्वद्,
पारंगतो न समभूद्रघुनन्दनाब्धेः।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चारैर्नृपो दशरथः श्रुतवान् सभायाम्
द्वारे स्थितो भृगुकुलार्णवपूर्णचन्द्रः।
रामः सहस्रभुजनाशकरोऽमितौजः
क्षत्रान्तकं सपदि चाभिगतः क्षितीशः।।17।।

नत्वा च भार्गवमयं नृपतिर्विनीतः
सत्स्वागतञ्च कृतवानुपवेश्य पीठे।
पाद्यार्घ्यचन्दनतया परिपूज्य विप्रम्
भक्त्या कृताञ्जलिरवस्थित एव चाग्रे।।18।।

भो! देव! शंभुकृपयात्तसमस्तबोध!
पादौ च ते निखिलपुण्यकरावलभ्यौ।
दृग्गोचरौ मम पुरः सुकृतेन जातौ
मां शाधि किन्तव कृते करणीयमद्य।।19।।

त्वद्दर्शनानुविजिताश्च मयाऽद्य लोका
स्त्वत्पादपांशुभिरशेषकुलं पवित्रम्।
गेहे स्थितिस्तव च मे सुकृतानि लोके,
हे देव! वर्द्धयति ते चरणौ नमामि।।20।।

प्रक्षाल्य पादयुगलम् सरयूजलेन
स्वर्णासने समुपवेश्य गृहागतं तम्।
कौशल्यया दशरथः सह भार्गवेन्द्रं
मोदान्वितश्च समपूपुजदग्रजातम्।।21।।

पुण्यानि मेऽद्य फलितानि गुरोरनेन
सन्दर्शनेन तव देहि शुभाशिषञ्च।
सद्यो विवाहितसुतान् परिरक्ष देव!
कः स्यात्सुखी न तव चेल्लभते कृपां यः।।22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रुत्वागतं भृगुपतिं कुशिकात्मजोऽपि
प्राप्तः सभां सपदि राजगुरुर्वसिष्ठः।
प्राप्तादरो नृपतिनाऽथ कुठारधारी
गाधेःसुतं मुनिवसिष्ठमथालिलिङ्ग।। 23।।

सम्यक् सभाजितमवेक्ष्य शुभासनस्थम्
तं भार्गवं रघुकुलस्य गुरुर्वसिष्ठः।
विज्ञाय रामकुशलादिकथाः सभायां
वृत्तञ्च कौशिकमुनेः प्रकटीचकार।। 24।।

यज्ञेषु होम विधिरोधि–निशाचराणाम्
उत्पातविघ्नकरणेऽर्पितजीवितानाम्।
नाशाय भूमिपतिमेत्य च याचकोऽभूद्
रामस्य कौशिकमुनिर्विधिवित्सभायाम्।। 25।।

वात्सल्यभावभरितोऽपि नृपश्च पुत्रं
प्राणप्रियं मुनिवराय न दातुमैच्छत्।
तत्रापि गाधितनयस्य यशः प्रतापः
व्याख्यापितो खलु मयाऽथ ददौ च रामः।। 26।।

रामोऽप्यगादनुचरन् मुनिमाश्वरण्यान्
सौमित्रिणाऽनुगत एव निशाचरेन्द्रान्।
हत्वा ह्यवाप मुनिनाऽर्जितशस्त्रविद्याम्
पुण्यानि चोग्रतपसाऽवचितानि काले।। 27।।

दिष्ट्या धनुर्मखविलोकनभावलीनो
रामो ययौ कुशिकजानुसृतो विदेहान्।
रामानुजेन सह वीक्ष्य सु–यज्ञवाटम्
राज्ञाऽप्तपूजनमुनिर्न्यवसच्च तत्र।। 28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सूर्योदये सति मुदाऽवसितेऽथ कृत्ये
प्रातश्च कौशिकमुपेत्य नृपो ननाम।
सीतां पिनाकधनुषा. कृतवीर्यशुल्काम्
आख्यापयच्च तनयोद्वहने प्रतिज्ञाम्।। 29।।

शैवं धनू रघुपतिः सहजानुभावाद्
राज्ञा प्रदर्शितमवेक्ष्य मुनेर्निदेशाद्।
उत्तोल्य रज्जुमभिकृष्य बभञ्ज मध्ये
सीतापतिः समभवद्रघुवंशदीपः।। 30।।

प्रोद्वाहिता जनकजा जनकाधिलक्ष्मी
रामेण चान्यतनयाश्च सुतैः सहान्यैः।
राजाऽद्य गेहमविशच्च मुदा वधूभि
राशीर्भिरञ्चतु कुलं नवदम्पती च।। 31।।

तस्मिन् क्षणे परशुराममुनिं दिदृक्षुः
आज्ञापितश्च जनकेन तदा ससीतः।
रामः सभामविशदर्चिभिरावृतश्च
विप्रांघ्रियुग्ममभितो नतिमर्पणोत्कः।। 32।।

रामोऽयमद्य पदयोः पतितः ससीतः
आशीर्भिराशु समलंक्रियतां महात्मन्।
नान्यः क्वचिद् भुवि भवेद् भवतोऽधिकश्च
रामो भविष्यति जयी भुवि चाशिषा ते।। 33।।

श्री कौशिकोऽपि मखरक्षणजातहर्षो
रामं धनुर्मखकृतेऽनयदिष्टवृत्या।
मन्ये शराशनमिषेण विवाहहेतोः
भूमिः शिवश्च तनयाकरदावभूताम्।। 34।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रामो निशम्य धनुषोऽथ विभज्जनं तद्
मौनं विहाय सदसि स्थितमाह रामम्।
द्रोही भवेन्मम गुरोर्धनुषोऽथ भङ्क्ता
नो चेद् हरेश्च धनुषोऽस्य भवेद् ग्रहीता।। 35।।

नत्वा मुनिं रघुपतिः समुवाच धीरः
क्षन्तव्यमद्य शिवचापमिषेण सीता।
प्राप्ता च मां शिवकृपाफलमेव नूनं
नो चेत्कथं धरणिजा मम धर्मपत्नी।। 36।।

उद्वाहितोऽथ शिवपादयुगं प्रणम्य
लब्ध्वाशिषश्च भुवि मेऽस्ति कृतार्थताऽत्र।
मन्ये शिवः स्वयमुपेत्य शुभाय चाद्य
त्वद्रूपतो नः समेधयितुं स्थितोऽत्र।। 37।।

श्रुत्वाऽपि रामवचनानि नयान्वितानि,
भक्त्या भृशं विलसितानि शुभानि विप्रः।
रामं निरीक्ष्य पुनरेव बभाण शंभो
श्चापस्य खण्डनविधौ पुरतःसभायाम्।। 38।।

दिव्यं धनुः सुरवरैरथ शंकराय
हन्तुं तदा त्रिपुरयुद्धगताय दत्तम्।
राजर्षये भुवि विदेहभवाय रोषाद्
प्रादाद् धनुर्मम गुरुश्च विभर्म्यहं तद्।। 39।।

यद् वैष्णवं धनुरिदं मम हस्तवर्ती
शाङ्र्ग धनुर्हरिरदाच्च पितामहाय।
तद्वै ऋचीकमुनिरात्मभवाय दिव्यं
चापं ददौ च जमदग्निकृतेऽद्वितीयम्।। 40।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



धन्वी पिता मम यदाऽत्यजदस्त्रशस्त्रम्
न्यस्तायुधश्च गतरोषतयाऽप्तविद्यः।
दर्पोद्धतार्जुननृपेण विघातितोऽभूद्
तस्मान्मयि स्थितमिदं धनुरस्ति हस्ते।।41।।

मन्ये हरिर्भुवि गतोऽस्ति धृतावतारः
शैवं धनुश्च विजहार विदेहदेशे।
हस्तंगतन्धनुरिदंच समर्पयामि
राम! त्वमद्य धनुरेतदवेहि दिव्यम्।।42।।

नो चेद्धरिस्तव ममाद्य महारणःस्यात्
नान्यं पुरः शिवधनुर्हतकं सहिष्ये।
उक्त्वा ददौ हरिधनुः सदसि स्थितानां
अग्रे च दाशरथये भृगुनन्दनोऽसौ।।43।।

रामोऽपि रामवचनानि निशम्य दिव्यं
तत्कार्मुकञ्च जगृहे सशरं जवेन।
सज्जीकृतं सपदि तेन शरेण चाह
तं भार्गवं परशुराममुदग्रबुद्धिम्।।44।।

मोघः शरः पततु कुत्र महीसुरोऽसि
न ब्राह्मणे शरमिमं प्रहिणोमि यस्माद्।
लोका गतिश्च तपसाऽधिगतास्त्वया ये
तान् हन्मि किं कथय कुत्र शरं त्यजेयम्।।45।।

दृष्ट्वा शरं कृतमधिज्यमुवाच रामो
नाहं वसामि निशि राम! महीतलेऽस्मिन्।
पूर्वं मया हि धरणी गुरवे प्रदत्ता
श्री कश्यपाय च निजाश्रममस्मि गन्ता।।46।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वावासमुत्तमगिरिञ्च महेन्द्रमद्य
गन्ताऽस्मि राम! रभसैव मनोजवेन।
लोकान् जहीह न गतिं मम बाणमोक्षाद्
शैलं प्रयामि तपसेऽस्मि तपोधनोऽहम्।। 47।।

सौभाग्यमेतु जनकात्मभवा च सीता
ह्यक्षय्यमस्तु भुवने भवतः प्रतापः।
कार्यावसानमिह मेऽद्य कृतं त्वयैव
पूर्णावतारमधुना प्रणमामि च त्वाम्।। 48।।

येनैव शाङ्‌र्गधनुषा प्रहितैः शरैश्च
दस्युप्रणाशनतया भुवि सर्वजेता।
सोऽयं विभाति करयोर्हरिचाप एव
राम! त्वमद्य भगवानसि सर्ववन्द्यः।। 49।।

त्वच्चाप एव हरिणाऽथ ममान्वयेऽयं
संस्थापितोऽसुरवधाय मया कृतं तद्।
ज्ञातं ह्यनेन भुवि मेऽवसितञ्च कार्यम्
स्यान्मंगलाय धनुरद्य मुदे सुराणाम्।। 50।।

गोभ्यो हिताय सुर–साधुकृते द्विजेभ्यो
जातोऽसि राम! कुरु संस्कृतिरक्षणञ्च।
याम्यद्य विप्रमतिको गतशस्त्रबुद्धिः
ध्यानात्मयोगमुनिवृत्तितपोभिरस्मि।। 51।।

रामेषुणाऽऽप सहसा च महेन्द्रशैलं
लीनस्तदा तपसि राममुनिर्बभूव।
सम्मिल्य गाधितनयेन स जामदग्न्यो
गाढं वसिष्ठमुनिमेष समालिलिंग।। 52।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्राश्रमे परशुराममुनेर्महेन्द्रे
देवाः समाययुरनुद्रुततापसाश्च।
वर्णैः सुधामयवचोभिरथास्तुवंस्ते
दीर्घायुषं सुचिरजीविनमुग्रबोधम्।। 53।।

दत्तात्रयादधिगतामधितन्त्रविद्या
माराधयन् भृगुकुलाब्धिशशिर्महेन्द्रे।
अद्यापि भक्तजनवांछितकल्पवृक्षः
राराज्यते मुनिवरस्तपसोद्धृतारिः।। 54।।

तदा शैलावासं प्रति कृतमतौ भार्गवमुनौ
समायातः कश्चिद् भृगुकुलभवो रामशरणम्।
कृपादृष्टिं दत्वा परशुधर इष्टं शममदात्
नतायाऽस्मै प्रेम्णा स्तुतिरकृत रम्या भृगुपतेः।। 55।।

**।। इति भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते रामरामयोः समागमो नाम एकत्रिंश सर्गः।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# द्वात्रिंश सर्गः

नुमः श्रद्धामूर्तिं गुरुपरशुरामं निशिदिनम्
स्तुमः श्रीविद्याया निभृतमभिरामं वशकरम्।
रुमःपाह्यस्मान् भोः कृतचरणशरणान् कलियुगे
इमो बुद्धया वाचा तव सदुपदेशाननुदिनम्।।1।।

विधेर्विष्णोः शम्भोरधिकगुणताऽन्वेषणपरो
ररक्षायं विप्रान् शिवगणमखध्वंसकरणाद्।
दधारायं विद्याममृतकरणीं मृत्युहरणीम्
स एवास्ते गोत्रे मुनिरखिलवंद्यस्य जप तम्।।2।।

तपः स्वाध्यायाभ्यां समुदितकुलं वीक्ष्य ललितम्
भृगुर्जातः ख्यात्यां च्यवनमुनिरूपेण भुवने।
ससर्जासौ मृत्युंजयकरममोघौषधिवरम्
यतोऽद्यास्ते पुष्टिर्मुनिपरशुरामान्वयभवा।।3।।

ददावस्थीनीन्द्रार्थितकुलिशनिर्माणकरणे
दधीचोऽ गाल्लोकं दिवि निवसतां साङ्र्गधनुषा।
हरिं वज्रेणेन्द्रं शिवमपि पिनाकेन मुदयन्
कुलाब्धेः सच्चन्द्रं भज परशुरामं निशिदिनम्।।4।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



धनुर्वेदे वेदेष्वधिकृतगतिर्भार्गवकुले,
तपः सिद्धिश्चोग्रा मुनिगणविशिष्टा नवविधा।
अलभ्याऽऽ मोघाऽसीत्कुलिशरचना यस्य च कुले
वदन्देऽजेयं तं परशुधरमाराध्यमनिशम्।।5।।

बभावाचार्यत्वं जगति यजमानस्य छलने
न्यषेधद्दानार्थं बलिमपि हरेर्बन्धनविधौ।
कुशच्छेदान्नेत्रं ह्यजहदपि यस्यान्वयभवः
तमद्याहं सेवे मुनिपरशुरामं कुलगुरुम्।।6।।

ग्रहा राज्यं यच्छन्त्यलमपहरन्त्याप्तविभवात्
तपो विद्याभ्यां यो दधदमृतसंजीवनकलाम्।
ग्रहोऽभूच्छ्रीशुक्रः कविरपि सुभोगप्रदमतिः
कुले यस्यास्तेऽसौ भुवि परशुरामो विजयते।।7।।

भृगोर्वंशे दिव्यः शुनकमुनिजःशौनकमुनिः
मुनीनां मुख्योऽभूद्वसुवसुसहस्रेषु मतिमान्।
प्रकर्त्ता प्रश्नानां मुनिजनकृते नैमिषवने
जनित्वा तद्वंशे भुवि परशुरामो विजयते।।8।।

पुराणाचार्य्यत्वं मृतिरपि विभेत्यस्य तपसो
मृकण्डोःपुत्रत्वं ह्यलभत सदाचारमतिभृद्।
मुनिर्मार्कण्डेयो हरिकलितमायाविरहितः
कुले यस्यास्तेऽसौ परशुभृदलं सद्विजयते।।9।।

कुले जाता लक्ष्मीरभवदपि वाणी कुलवधूः
सुपुत्रत्वं यातो भृगुषु स च सारस्वतमुनिः।
कृपा शंभोर्विष्णोरपि भृगुकुलेऽभून्नवनवा,
जनित्वा तद्वंशे मुनिपरशुरामो विजयते।।10।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुनिः सावर्ण्याख्यः क्वचिदपि च वत्सो मुनिवरः
क्वचिन्मार्कण्डेयो भृगुरथ कुले भार्गव इति।
तथौर्वश्च्यावोऽपि प्रवरमुनिषु ख्यातिसहिताः
सुगोत्रे विद्यन्ते मुनिपरशुरामस्य भुवने।। 11।।

महाब्धेः प्रारभ्याहिमगिरिमुदात्ताश्च भृगुजाः
तपःपूता गोत्रस्मरणरसिका भान्ति यशसा।
कृपााऽस्ते निर्बन्धा परशुधरजा तेषु महिता
तनिष्यन्ते कीर्तिं भुवि परशुरामस्य ललिताम्।। 12।।

तदौर्वस्था विद्या विलसति यथा तस्य तनये
ऋचीके तद्वत्सा भवति जमदग्नौ मुनिवरे।
प्रदीपेभ्यो दीपा दधति नवतां यान्ति च यया
तथा विद्यामूर्तिर्भुवि परशुरामो विजयते।। 13।।

भृगूणां वैदुष्यं निगमसरणिश्चागमगतिः
मतिःशास्त्राब्धिं या तरणगतिशीलाऽथ मृजिता।
तपः स्वाध्यायाभ्यां परमविधुतो बोधविभवो,
कुले यस्यास्तेऽसौ प्रभुपरशुरामो विजयते।। 14।।

गले मालाक्षोत्था परशुरथ दक्षे करतले
धनुःस्कन्धालम्बी धृतशरकरो वाम उदितः।
त्रिपुण्ड्रांङ्कं भाले भसितधवलं भाति च मुखं
सुविद्यायास्तेजः पृथुपरशुरामो विजयते।। 15।।

क्वचिद्विद्याभक्तिः क्वचिदपि च शास्त्रामगरुचिः
क्वचिद् धत्ते धैर्यं तपसि निरतोऽयं द्विजवरः।
स्वयं विष्णोरंशः शिवचरणभक्त्यर्पितमतिः
सदा शस्त्री शास्त्री भुवि परशुरामो विजयते।। 16।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुखे दिव्या वाणी निगमभरिता नीतिनिपुणा
लसत्तेजो भाले यमनियमजञ्चापि तपसा।
कृपापूर्णा दृष्टिर्नतजनसुखावर्जनकरी
सदा यत्रास्तेऽसौ भुवि परशुरामो विजयते।। 17।।

कुठारः संप्राप्तः शिवकरुणया शत्रुविपिनं
समुच्छेत्तुं शश्वद् द्विजसुरनिहन्तॄन् च भुवने।
त्रिशूलघ्नो मन्ये भुवनजनशूलापहरणे
शिवोऽभूच्छ्रीरामो भुवि परशुरामो विजयते।। 18।।

भृगोः वंशे लोकेऽभवदिह दधीचो दिविषदां
कृतेऽयच्छत्स्वास्थीन्यभवदथ वज्रास्त्रममितम्।
पिनाकं शाङ्‍र्गचापयुगलमभूदेकमगमत्
ऋचीकायायं यत्कुलमणिरभून्नौमि तमहम्।। 19।।

पिनाकस्योच्छेदे कृतवति च रामे तिरहुते,
बिना शम्भोर्भक्तं क इह कुपितः स्याद् भृगुपतिम्।
मिलित्वा श्रीरामं निजधनुरदात् ज्ञातुमपि यो
भजे दीर्घायुष्यं मुनिपरशुरामं निशिदिनम्।। 20।।

जरत्कार्वोः पुत्रः समजनि च यायावरकुले
यदाऽस्तीको धीमान् समधिगतशास्त्रं भृगुसुतान्।
ररक्षानन्तेभ्यश्च्यवनमुनिशिष्योऽहियजने
भृगोर्वंशे जातं भज परशुरामं परशिवम्।। 21।।

क्वचिच्छक्तिर्दृष्टेर्विधिभुजभवानामपहृता
तदाऽन्धैस्तैरौर्वोऽधिगतनोतिभावः करुणया।
ददौ ज्योतिस्तेभ्यो धरणिपकुलेभ्यो मुनिवरो
जनित्वा तद्वंशे मुनिपरशुरामो विजयते।। 22।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रुधा सर्वान् लोकान् विलयनथ चोद्यन्मुनिवरो
दयापूर्णैः सर्वैः पितृभिरवरोधः प्रकटितः।
तदौर्वः क्रोधाग्निं जलधिगतमास्थापयदहो
जनित्वा तद्वंशे मुनिपरशुरामो विजयते।।23।।

अभिज्ञाने विप्राः स्मरणमिह कुर्वन्ति मुदिता
मुनीनां गोत्राणि स्वकुलमहिमानं भुवि सदा।
भृगुर्मार्कण्डेयो भवति खलु सावर्ण्य मुनिराट्
तथा वत्सो गोत्रम् मुनिपरशुरामान्वयकृते।।24।।

क्वचिच्च्यावश्चौर्वः क्वचिदभिमतो भार्गवमुनिः
दधीचाद् दाधीचा भुवनविदिता भार्गवभवाः।
द्विजास्तद्वल्लोकेऽभवनिह च वात्स्यायनभवाः
कुलं विद्यापूर्णं मुनि परशुरामस्य तनुते।।25।।

हिमाद्रेः पार्श्वं स्यादथ भवतु सिन्धुश्च निकषा
भवेदार्य्यावर्तो द्रविड़जनभूमिर्भवतु वा।
विदर्भोऽनूपो वा व्रज–मधुपुरौ वा शिवपुरी
वितीर्णाः सर्वेशाः मुनिपरशुरामस्य कुलजाः।।26।।

तटं स्याद् गंगाया हरिनयनजाया अपि भवेद्
तथा स्यात्कालिन्द्यास्तटमथ भवेन्नार्मदतटम्।
हिमाद्रेरासिन्धुं भृगुकुलभवा भान्ति तपसा
यशो ज्योतिर्लोके खलु परशुरामस्य तनुते।।27।।

कुले ते ये जाता भृगुकुलमणेः शौर्यमनिशम्
मुदा स्मारं स्मारं भृगुकुलभवानामपि कथाः।
समाजे स्वे ग्रामे सदसि निभृतं कीर्तनरताः
वरं पुण्यं लब्ध्वा विदधति हृदा गौरवपदम्।।28।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अशेषास्ता विद्यास्त्वयि शिवभवा भान्ति विमलाः
सदौजस्तेजांसि स्वकृतमहिमन्याश्रिततया।
विराजन्ते शश्वन्निगमसरणिश्चापि वदने
नमामः श्रीरामं स्वकुलशुभदातारमनिशम् ।। 29 ।।

प्रशस्तीनां भावादखिलसुरवंद्यो नतिपरं
जनं प्रेम्णाऽपृच्छत्परिचयमशेषं भृगुसुतः।
जहर्षायं पृष्टश्चरणयुगलं भूरि विनमन्
अवोचत्स्वं वृत्तं मुनिपरशुरामं द्विजमणिम् ।। 30 ।।

प्रभो! विष्णोर्नेत्राद् गलितविभवा श्रीर्जलतनुः
सुरर्षेः श्रीरागानुरणनतया या हरिसरिद्।
सरय्वास्तस्याः सत्तटनिवसनायार्पितधियां
द्विजानां श्रीरामानुमतिसहितानां कुलभवः ।। 31 ।।

पुनाना ये पंक्तीर्मखविधिविशिष्टा महिसुराः
सदा सेवन्ते स्म सरयुजलमभ्यर्चनपराः।
तपः स्वाध्यायाभ्यां विमलयशसा चापि भुवनं
पुनन्त्यद्यत्वे ते सरयुतटजाता द्विजवराः ।। 32 ।।

और्वश्च्यावः प्रवरमुनयो भार्गवश्चाप्नवांश्च
पंचैवेते मम भृगुमणे! जामदग्न्येन सार्धम्।
वामो पादः कमलनयनो विष्णुदेवः कुलस्य
वामा चूडा गुरुभिरुदिता सामवेदस्तथा मे।। 33 ।।

जाता वंश्या मदनपुरगा जातु पूर्वोत्तरस्था
ख्यातो विप्रो गणपतिरिति ब्रह्मकर्माभिलीनः।
तीर्थं तीर्थं व्रजनभिमतः प्राप्य गंगातटं सः
काशीभूपादधिगतयशस्तत्र निन्येऽप्यहानि ।। 34 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ग्रामं ग्रामं भ्रमति च वनं भार्गवश्चास्य गोत्रम्
कल्पावासं मकररविगे चाकरोद् धर्मनिष्ठः।
गङ्गाक्षेत्रं भ्रमणरसिको याम्यतीरं गतोऽभूद्
तत्रत्यानामभिमतमतिस्तत्र वासं व्यधाच्च ।। 35 ।।

वासं कृत्वा कतिपयदिनान्येष यातः प्रतीच्याम्
प्रीतो दृष्ट्वा स्वकुलवसतिं चावसत्तत्र मासम्।
गच्छन्तस्मात्सपदि तमसां पुण्यतोयां च तीर्त्वा
रेवाराज्यं ह्यविशदतिथिर्विन्ध्यभूमिं द्विजाग्र्यः ।। 36 ।।

गच्छन् पदातिरयमेति पुरं धबैयां
यत्रावसन् मुनिवसिष्ठकुलस्य विप्राः।
रीवानृपादधिगता बहुमानमुद्य
च्छौर्यान्विता पृथुयशाश्च तिवारिवंश्याः ।। 37 ।।

सीमेव तत्र कलनादकरी महाना
संरक्षतीव तटिनी तटगान् प्रतीच्याम्।
पुण्योदका प्रवहति प्रविलोक्य रम्यां
स्नात्वा जजाप सवितारमुदग्रबोधः ।। 38 ।।

नद्यां त्रयः समुदिता जलनिर्झराश्च
स्वाद्वम्बु निर्मलतरञ्च विलोक्य धीमान्।
गंगा सरस्वतियुता यमुना सरन्त्यः
राजन्ति निर्झरतया ध्रुवमेष मेने ।। 39 ।।

सन्ध्यार्चनानुरतमन्यपुरस्य विप्रं
वीक्ष्याययुश्च कृषका नगराधिनाथम्।
श्रुत्वाऽनयन्निजनिवासममुं प्रबुद्धं
पाद्यार्घ्यपूजितपदं समुवाच नम्रः ।। 40 ।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्येऽतिथिर्भगवतः कृपया मदर्थं
गेहं कुलं च तपसैव पुनातुमद्य।
प्राप्तो भवान् परिचयाय ममाभिलाषा
प्रष्टुं क्वचिद् सपदि मां मुखरीकरोति।। 41।।

नाम्नाऽस्म्यहं गणपतिर्मम सामवेदः
गान्धर्ववेद उपवेदतया प्रसिद्धः।
शाखाऽस्ति भार्गवकुलस्य च कौथुमीति
सूत्रञ्च गोभिलमवेहि महीसुरेन्द्र!।। 42।।

ख्यातं सिंहनजोरीति स्थानं रखुआखोरकम्।
सखुईसहितं वेत्थ भार्गवाश्चर्णारजाः।।43।।
भार्गवाणां पुरञ्चास्ति बिहारेऽपि यतो भुवि।
वृत्या वसन्ति मद्वंश्याः त्रिपाठी चास्मि ते पुरः।।44।।

तदा भोनूशाहस्तदनुजननो गह्वर इति
गुरुं कृत्वा वासं गणपतिकृतेऽयच्छदुचितम्।
जगन्नाथस्तस्मादवनिपतिपूज्यो व्रतमतिः
पुराणानां वेत्ताऽगमदधिगतश्चाथ भसमाम्।। 45।।

वैद्याग्रणीश्च तनयं हरदत्तदेवं
लब्ध्वा तुतोष च यतोऽथ महेश्वरार्य्यः।
ज्ञातस्ततो मुनिवरः कमलाप्रसादः
यस्यात्मजो बुधमतिः बुदुनेति रामः।। 46।।

यो मां सुतं शिशुवयस्यथ संविहाय
भ्रातृद्वयं च भगिनीमिह बाल्यकाले।
शोकाकुलाञ्चजननीमपि स्वर्गतोऽभूद
तस्मै नतिं प्रकुरुते मिथिलाप्रसादः।। 47।।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्ये कृपा तव गुरो मयि मोहशीले
पुण्यञ्च पूर्वपुरुषार्जितमस्ति सत्यम्।
येनाद्य ते चरणयोः स्तुतिमाचिकीर्षन्
श्रीभार्गवीयमिदमर्पयितुं स्थितोऽस्मि।। 48।।

शङ्केऽल्पबुद्धिजनितानि पदानि सम्यक्
हास्याय सन्मतिजुषां प्रभवन्ति लोके।
स्मृत्वा स्खलद्वचनतोऽपि भवन्ति तुष्टाः
मुग्धा कुलस्य गुरवोऽथ कृतं मयैतत्।। 49।।

श्री भार्गवान्वयपयोनिधिपूर्णचन्द्रः
रामो निशम्य मुमुदे च ददौ शुभाशीः।
मुग्धः शिशुः प्रणतिभिःसमतोषयत्तं
नत्वा मुहुः प्रमुदितो मिथिलाप्रसादः।। 50।।

गुरुकुल कांगड़ी पुस्तकालय 180675

इत्थं प्रभोः परशुराममुनेः प्रसादात्
वृत्तं स्वगोत्रपुरुषैः कृतमेव लोके।
ज्ञातं यथा विरचितं खलु भार्गवीयम्
स्वान्तः सुखाय च मयाऽल्पधिया तथैव।। 51।।

भृगुकुलर्षिगणाचरितादभुतं
न मनुजाः प्रभवन्त्यनुवर्णितुम्।
परशुरामकृपालवतो मया
व्यरचि तत्पदयोरिदमर्प्यते।। 52।।

**।। इति पंक्ति पावनेन भार्गवेण त्रिपाठिना मिथिलाप्रसादेन कृते भार्गवीये परशुरामस्तुतिर्नाम द्वात्रिंशः सर्गः।।**

**।। समाप्तश्चायं ग्रंथः।।**

**।। श्री सीतारामर्पणमस्तु।।**

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

## मिथिलाप्रसाद त्रिपाठी

**जन्म स्थान** : ग्राम–भस्मा, पत्रालय–पल्हान, जिला–रीवा (म.प्र.)

**माता–पिता** : 31.08.1950 भाद्रपद कृष्ण चतुर्थी

**जन्म तिथि** : गुरुवार, वि.सं. 2007

**निवास** : 57–ए, वैशाली नगर, इन्दौर (म.प्र.)

**अध्ययनः** (क) संस्कृत–आचार्य (वाराणसी) एम.ए, पी–एच. डी., डी. लिट्.
(ख) हिन्दी–एम.ए., पी–एच.डी.
(ग) आयुर्वेद–रत्न (प्रयाग) एवं कण्ठसंगीत प्रमाण पत्र (वाराणसी)

**पदक** : सर्वोच्च अंक हेतु तीन स्वर्ण पदक, दो रजत पदक

**सम्मान** : वैष्णव भूषण (सूरत), प्रादेशिक संस्कृत सम्मान (अ.प्र.सि.वि.वि., रीवा) एवं जीवाजी वि. वि., ग्वालियर

**प्रकाशित रचनाएँ : शोध ग्रंथ**
(क) श्रीरामभक्ति का विकास
(ख) वाल्मीकि रामायण और प्राकृत–अपभ्रंश
(ग) रामकाव्य तुलसी साहित्य के रामकथन
**महाकाव्य** : सतनामिगौरवम् **शतक काव्य**– भावमाला (संस्कृतशतकम्)
राष्ट्रशतकम् केशवशतकम्,
सपादशतकम्, शब्दांजलिः,
माधवीयम्, मयंकशतकम्

**स्तुति काव्य** – भारती महिम्नः स्तोत्रम्
हनुमन्महिम्नः स्तोत्रम्,
जानकीमहिम्नः स्तोत्रम्

**अन्य पंचाशिका काव्य**–चार, कविताएँ–पंद्रह संस्कृत के राष्ट्रीय एव अन्तर्राष्ट्रीय सम्मेलनों एवं संगोष्ठियों तथा कार्यशालाओं में अनेक बार भाग लिया, शोधपत्र वाचन किया और विश्वविद्यालय का प्रतिनिधित्व किया। लगभग 30 शोधार्थियों ने निर्देशन में Ph. D. उपाधि प्राप्त कर ली है।

**पूर्वम** : देवी अहिल्या विश्वविद्यालय, इन्दौर के तुलनात्मक भाषा एवं संस्कृति अध्ययनशाला विभाग में आचार्य एवं अध्यक्ष।

**सम्प्रति निदेशक** : कालिदास संस्कृत अकादमी, म०प्र०, उज्जैन

CC-0. Gurukul Kangri Collection, Haridwar